# ''देवीभागवतोक्तविषयाणां तान्त्रिकदृष्ट्या परिशीलनम्''

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

''विद्यावारिधिः'' (पी-एच्०डी०) इत्युपाधये प्रस्तुतोऽयं

## शोध-प्रबन्धः




२००७

निर्देशकः
प्रो० पुरुषोत्तमप्रसादपाठकः
सम्मानिताचार्य्यः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

अनुसन्धाता:
ज्ञानेन्द्र कुमार मिश्र
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी
पंजी. स. ३२८८/४८८९

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

भाद्रपद शुक्लपक्ष
कृष्ण जन्माष्टमी

४ सितम्बर २००७

# ''देवीभागवतोक्तविषयाणां तान्त्रिकदृष्ट्या परिशीलनम्''

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

''विद्यावारिधिः'' (पी-एच्०डी०) इत्युपाधये प्रस्तुतोऽयं

## शोध-प्रबन्धः




२००७

निर्देशकः

**प्रो० पुरुषोत्तमप्रसादपाठकः**

सम्मानिताचार्य्यः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

अनुसन्धाता:

**ज्ञानेन्द्र कुमार मिश्र**

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

पंजी. स. ३२८८/४८८९

*सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी*

भाद्रपद शुक्लपक्ष
कृष्ण जन्माष्टमी

४ सितम्बर २००७

# *निर्देशक प्रमाणपत्रम्*

''देवीभागवतोक्तविषयाणां तान्त्रिकदृष्ट्या परिशीलनम्'' इति विषयमधिकृत्य श्री ज्ञानेन्द्रकुमारमिश्रः मदीयनिर्देशने यथानियममनुसन्धात्। प्रस्तुतः शोधप्रबन्धो गवेषकस्यास्य मौलिकी रचना। साङ्गोपाङ्ग विषयस्पर्शिनो विचाराः, निष्पक्षपातं स्वीयभावप्रकाशनं, नवीनतथ्यप्रकाशनम् , इति यथायथं विनिवेशितम्।

श्री ज्ञानेन्द्रकुमारमिश्रः आचारव्यवहारदृशापि विद्यावारिधिरित्युपाधेरूत्तमं पात्रमिति तन्निबन्धं सम्पूर्णानन्दसंस्कृत विश्वविद्यालयस्य विद्यावारिधिः (पी-यच०डी०) इत्युपाधये परीक्षणार्थं संस्तौमि......

निर्देशकः

२६।१०।०६

(प्रो०डॉ०पुरुषोत्तम प्रसाद पाठकः)
सम्मानिताचार्य्यः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

श्रीः

# मङ्गलाचरणम्

ॐ सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि।
बुद्धिं या नः प्रचोदयात्।

या सर्वचैतन्यस्वरूपा आदि-अन्तरहिता
एवं ब्रह्मविधास्वरूपिणी भगवती जगदम्बिका
वर्तन्ते, तामहं ध्यायामि, सा जगदम्बिका
अस्माकं तीक्ष्णबुद्धिं रचय।

सृष्टौ या सर्गरूपा जगदवनविधौ पालिनी या च रौद्री
संहारे चापि यस्या जगदिदमखिलं क्रीडनं या पराख्या।
पश्यन्ती मध्यमाथो तदनुभगवती वैखरी वर्णरूपा
सास्मद्वाचं प्रसन्ना विधिहरि गिरिशा राधितालङ्करोतु।।०।।



# **प्रतिज्ञप्तिः**

अहं प्रतिजाने यद् ''देवीभागवतोक्तविषयाणां तान्त्रिकदृष्ट्या परिशीलनम्'' इत्याख्यः शोधप्रबन्धो मया सम्मानिताचार्यपदमधिष्ठितानां प्रो० पुरुषोत्तमप्रसादपाठक महोदयानां निर्देशने यथानियमं सम्पादितः। इतः पूर्व शोधप्रबन्धस्यास्य कुत्राप्यंशतः पूर्णतो वा केनापि प्रस्तुतिर्न विहिता। मदीयं शोधकार्यं सर्वथामौलिकमस्ति।

गवेषकः
ज्ञानेन्द्र कुमार मिश्र
26/10/2007
(ज्ञानेद्रकुमारमिश्रः)

# **आभारप्रदर्शनम्**

समस्तचराचरजगत्प्रपञ्चानिमित्तकारणभूतस्य दुःखदावाग्निसन्तप्रजनसन्तापशामकस्य **साम्बसदाशिवस्य** पादपङ्कजेष्वहर्निशं शिरसाप्रणमामि यस्याहैतुक्या कृपया शोधप्रबन्धोऽयं पूर्णतामगात्। तदनु सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सम्मानिताचार्य्यपदमधिष्ठिाः शब्दशास्त्र-ज्योतिष-तन्त्र-साहित्य पुराणादिशास्त्रेषु पारङ्गताः परमसौम्याः सततमध्ययनाध्यपनकर्मनिरताः प्रथितयशसः संस्कृतविद्याविभागाध्यक्षचराः परमगुरुचरणाः **प्रो० पुरुषोत्तम प्रसाद पाठक** महाभागाः सादरं सश्रद्धं च वन्द्यते येषामनुग्रहं चाहं पाथेयत्वेन लब्ध्वा शोधयात्रां सम्पादितवान्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सकलगुणगणभूषितयुषां सरस्वतीसमुपासकानामध्ययनाध्यापनकलाकोविदां साख्यंयोगतन्त्रागमविभागाध्यक्षाणां प्रतिकुलपतिपदविभूषितां पूज्यपादानां गुरुवर्याणां **प्रो० रामजीमालवीय** महाभागानां पादपद्मयोः सादरं नमामि।

अतः परंपूज्यानां परमश्रद्धेयानां भगवत्कल्पानां पितृचरणानां **श्री प्रेमनाथ मिश्र** महोदयानां पादपङ्कजेषु सततं मूर्ध्ना प्रणमामि, गरीयस्याः मम मातुः **श्रीमती मनोरमा मिश्राः** प्रणम्यते तस्याः स्नेहस्य वात्सल्यस्य च न किञ्चित्प्रतिदानं सम्भवति।

अत्रैव प्रसङ्गेऽहं स्वपाणिगृहीत भार्यायाः **श्रीमत्या ममतामिश्राश्चापि** बहुवारम् आभारप्रदर्शनङ्करोमि यो हि विवाहानन्तरं मे अध्ययनस्य प्रेरणास्त्रोतरूपास्ति।

प्रबन्धकर्मणि अहर्निशं साधुवचनेन प्रेरिताः मम मित्राणि **श्री रमाकान्त पाण्डेय** महोदयाः, **श्री उमाकान्त पाण्डेयाः**, तथमम श्यालकः **श्रीकृष्णकुमार दिक्षितः**, अपरो **श्री शशिकुमार दूबे** एभ्यः सर्वेभ्योऽपि धन्यवादान् समर्पयामि।

यद्यपि संस्कृतभाषाटङ्कणकार्यं महत्कष्टं जनयति तथापि अक्षरसंयोजकः आचार्योपाधिमष्ठितं **श्री अभिषेक पाठक** महोदयः समुचितविधिना प्रबन्धस्यास्य टङ्कणकृतं, तदर्थं ते सादुवादार्हाः सन्ति।

अतः परंपूज्यानां परमश्रद्धेयानां भगवत्कल्पानां पितृचरणानां **श्री प्रेमनाथ मिश्र** महोदयानां पादपङ्कजेषु सततं मूर्ध्ना प्रणमामि, गरीयस्याः मम मातुः **श्रीमती मनोरमा मिश्राः** प्रणम्यते तस्याः स्नेहस्य वात्सल्यस्य च न किञ्चित्प्रतिदानं सम्भवति।

अत्रैव प्रसङ्गेऽहं स्वपाणिगृहीत भार्यायाः **श्रीमत्या ममतामिश्राश्चापि** बहुवारम् आभारप्रदर्शनङ्करोमि यो हि विवाहानन्तरं मे अध्ययनस्य प्रेरणास्त्रोतरूपास्ति।

प्रबन्धकर्मणि अहर्निशं साधुवचनेन प्रेरिताः मम मित्राणि **श्री रमाकान्त पाण्डेय** महोदयाः, **श्री उमाकान्त पाण्डेयाः**, तथमम श्यालकः **श्रीकृष्णकुमार दिक्षितः**, अपरो **श्री शशिकुमार दूबे** एभ्यः सर्वेभ्योऽपि धन्यवादान् समर्पयामि।

यद्यपि संस्कृतभाषाटङ्कणकार्यं महत्कष्टं जनयति तथापि अक्षरसंयोजकः आचार्योपाधिमष्ठितं **श्री अभिषेक पाठक** महोदयः समुचितविधिना प्रबन्धस्यास्य टङ्कणकृतं, तदर्थं ते सादुवादार्हाः सन्ति।

अन्ते च ज्ञाताज्ञातानां सकलानां मित्राणाञ्च प्रत्यापि आभारं द्योतयन् प्रकृतं शोधप्रबन्धं नीरक्षीरविवेकहेतवे विदुषां समक्षं प्रस्तौमि।

गवेषकः
ज्ञानेन्द्र कुमार मिश्र
26/10/2007
**(ज्ञानेन्द्रकुमार मिश्रः)**
प०सं० 3288/4889
दि० 21/11/03

..............................

# *विषयानुक्रमणिका*

## भूमिका

# **भूमिका**

विवितमेवास्ति तत्र भवतां यद्भगवता श्रीकृष्णद्वैपायन व्यासेन श्रुतीनां सारमाकलय्य अष्टादश पुराणान्युपपुराणानि च रचितानि। तेष्वेकतममिदं श्रीमद्देवीभागवत्। अत्र भगवत्याः पराशक्तेः प्रादुर्भावः तत्कृतदुष्टजनसंहारः शिष्टजनपालनं भक्तानां कठिनस्थितिषु च साहाय्यं बाहुल्येन वर्णितमस्तिं अत एवार्यधर्मावलम्बिनामेतद्ग्रन्थरत्नं पठनश्रवणपूजनादिभिः सुसम्मानितं विद्यते। एतदतिरिक्तमाधुनिके समये यद्येतस्य वैज्ञानिकदृष्ट्या विद्वद्भिरनुसन्धानं क्रियते तदा बहु लोकोपकारि तथ्यं सम्मुखीकर्तुं शक्यते। अहं तु केवलमस्य ग्रन्थस्य तान्त्रिकदृष्ट्या परिशीलनं कृतम् , येन इदं ज्ञातं भविष्यति यदस्मिन्ग्रन्थे कुत्र कुत्र तन्त्रस्य प्रभावः विद्यते, केन प्रकारेण तान्त्रिकदृष्ट्या तस्य लाभो भविष्यति इति विचारो प्रस्तुतः।

एतस्मिन् ग्रन्थे बहवो मन्त्राः बहूनि स्तोत्राणि कवचानि चेतादृशीनि सन्ति येषामुपयोगेन साधारण मानवानां बहव उपकाराः भवितुमर्हन्ति। साम्प्रतं यदा भारतवर्षे अनेके रोगाः शोकाः मनस्तापाश्च विद्यन्ते तेषां जनानां मानसेषु नैकविधा

अशान्तयः कोलाहल मस्ति। आसुरीशक्तिसम्पन्नानामेकेषां राष्ट्राणां मनस्सु समग्रं विश्वमुदरसात्मकर्तुं या ज्वाला धूधूकारेण समं समुज्जम्भते तस्या उपशमायापि अस्मिन् श्रीमद्देवीभागवते बह्वयो युक्तयोऽनेके मन्त्राश्च विद्यन्ते येन आसुरीशक्तिसम्पन्नानां देशानां मनोभावं परिवर्तितुं कर्तुं क्षमः। एतद् श्रीमद्देवीभागवतस्य श्रवणमननादैहलौकिकं पारलौकिकमुद्वा स्वार्थस्य परमार्थस्य च साधनमनायासेन भवितुमर्हति। अद्यापि लौकिकं सुखं मानं सम्मान च तृणवन्मन्यमाना बहवः शक्तयुपासका अलक्षितभावेन वर्तमाना आत्मानं सर्वप्राणिषु निवसन्तं परमात्मनं च स्तुवन्तः संसारेऽहर्निशं सुखसन्दोहं वर्षयन्ति। श्रीमद्देवीभागवते शक्तेः किं स्वरूपमस्ति अस्य विषयस्योपरि अतिसूक्ष्मतरो विचारः प्रस्तूयते। भगवान् व्याख्याद्वारा रचिते श्रीमद्देवीभागवते द्वादशस्कन्धाः विद्यन्ते। प्रतयेक स्कन्धेषु भगवत्याः महामायायाः विषये यद् किमप्यस्ति तत्सर्वं तंत्र प्रभावेण युक्तमस्ति। अतः शक्तिस्वरूपमपि तंत्रेणप्रभावः विद्यते। अग्रे शक्तेः किं स्वरूपम्।

**जगत्स्वरूपाप्यपनीतरूपा**
**संसारताराय च पोतरूपाः**
**शिवादभिन्नापि शिवाप्ति हेतुः**
**शक्तिः शिवं नः सततं तनोतु ।।०।।**

शक्तिरेव सम्पूर्ण जगदस्य सृष्टिः स्थितिः प्रलयं करोति। ब्रह्मा या सृष्टिः करोति। विष्णुः यः रक्षा करोति, तथा रुद्रः यः संहारः करोति, इदं सर्वं शक्तेः स्फुरणमस्ति। इदं सर्वं देवीभागवतस्य निम्नलिखित श्लोकैः स्पष्टो वर्तते।

**नूनं सर्वेषु देवेषु नाना नामधरा ह्यहम् ।**
**भवामि शक्तिरूपेण करोमि च पराक्रमम् ।।०।।**
**गौरी ब्राह्मी तथा रौद्री वाराही वैष्णवी शिवा ।**
**वारुणी चाथ कौबेरी नारसिंही च वैष्णवी ।।०।।**

सर्वेदेवाः शक्तेः प्रेरणयैव सुख दुःखस्यानुभवं कुर्वन्ति। मनुष्याणामथवा अन्येषां जीवानां का कथा। यथा चेतनपदार्थेषु शक्तेः विलासः प्रत्यक्ष दृष्टिगोचरी भवति, तथैव जडपदार्थेष्वपि तस्याः प्रभावः दृश्यते, यथा नदीनां प्रवाहः, जलेशीतं, अग्ने औष्ण्यं, सूर्यचन्द्रौ प्रकाशकत्वं, घटपटादिपदार्थानां प्रकाश्यत्वम्रादेः कारणं प्रकृतिरेवास्ति। भगवतो व्यासः श्लोकेलिखि तमसित----

**जलेशीतं तथा बह्नावौष्ण्यं ज्योतिर्दिवाकरे ।**
**निशानाथे हिमाकारं प्रभवामि यथा तथा ।।०।।**

ईश्वरे समस्तकार्यकरणस्य यां सामर्थ्यमस्ति स शक्ति कारणादस्ति। परब्रह्मपरमात्मनः शक्तिविशिष्टोभूत्वा एव जगदस्य रक्षणं नियमनादिसर्वं कार्यं कर्तुं समर्थो भवति। शक्तयारहितेन किंचिदपि कार्यं कर्तुं न शक्नोति, इदं देवीभागवतस्य श्लोकेन स्पष्टो भवति----

तच्छक्तिभूतः सर्वेषु भिन्नो ब्रह्मादिमूर्तिभिः ।
कर्ता भोक्ता च संहर्ता सकलः स जगन्मयः ।।०।।

अत्र सकलशब्दस्यार्थः ''कलया सह वर्तमानः सकलः'' अर्थात् शक्तिविशिष्ट परब्रह्मैव सर्वेषु कार्येषु समर्थो भवन्ति। तस्याः शक्तेः भिन्न भिन्न शास्त्रेषु भिन्न भिन्न नाम्ना उल्लेखो वर्तते। यथा--- सांख्ये तथा योगे सत्वगुणं, रजोगुणं, तथा तमोगुणस्य साम्यावस्था प्रकृतिनाम्ना उच्यते। वेदान्ते-इयं शक्ति अविद्या अथवा माया नाम्ना कथिता वर्तते। तान्त्रिकाः तन्त्रे तं शक्तिनाम्नैव स्वीकुर्वन्ति। देवीभागवे उभयथा शक्तिः मन्यते एका सगुणा द्वितीया निर्गुणा।

सगुणा निर्गुणा चेति द्विधा प्रोक्ता मनीषिभिः ।
सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ।।०।।

एष तान्त्रिकाणां परमोसिद्धान्तः।

तान्त्रिकप्रवरो वसुगुप्तः ''चैतन्यमात्मा'' इदं सूत्रं रचितम्। अस्यार्थः यत् चेतनस्य भावः चैतन्यं (स्वातन्त्राख्य शक्तिः) आत्मा अस्ति। सा कस्य आत्मा। समस्तस्थावरजङ्गमात्मकजगदस्य। इदमुक्त सूत्रस्य व्याख्यायां ''विशेषाचोदनात् भावाभावरूपस्य जगतः'' एषा उक्तया क्षेमराजेन सिद्धः कृतो वर्तते। प्रथमस्तु यद् मया लिखितं यत् शक्तिं विना ईश्वरं प्राप्तकरणमन्यः कोप्युपायो नास्ति इदं तान्त्रिकप्रवर अभिनवगुप्तस्य उक्तया स्पष्टो भवति----

**तस्माद्येन मुखेनैष भात्यनंशोऽपि तत्तथा ।**
**शकितरित्येष वस्त्वेव शक्तितद्वत्क्रमः स्फुटः ।।०।।**

अस्य श्लोकस्य व्याख्याकारो जयरथः लिखति, ''अनंशोऽपि सदाशिवः येन मुखेन भुवनाद्यल्यतमांश लक्षणेन मुखेन भावनादौ भासते तन्मुखं तु शिवप्राप्त्युपायतया शक्तिरेव, नहि एतदवगमादौ उपायान्तरमस्ति, उपपद्यते वा। अतश्च शक्तिशक्तिमतोः उपायोपेयभावात्मा क्रमः सम्यगेव स्फुटः''।

परब्रह्म निरवयवभूते सत्यपि ध्यानकर्तुं समये यस्य प्रभावात् यदा कदा सावयवं ज्ञायते सैव शक्तिरस्ति, इयमेव शक्तिः ब्रह्मप्राप्तेः द्वारमस्ति। शक्तया व्यतिरिक्तः ब्रह्मप्राप्तेः

कश्चिदन्यः मार्गो नास्ति। अयं तान्त्रिको सिद्धान्तः देवीभागवते प्राप्यते। यथा---

सा च माया पदे तत्त्वे संविद्रूपेऽस्ति सर्वदा ।
ततो माया विशिष्टां तां संविदं परमेश्वरीम् ।।०।।
मायेश्वरीं भगवतीं सच्चिदानन्द रूपिणीम् ।
ध्यायेत्तथाराधयेच्च प्रणमेच्च जपेदपि ।।०।।
तेन सा सदया भूत्वा मोचयत्येव देहिनम् ।
स्वमायां संहरत्येव स्वानुभूति प्रदानतः ।।०।।

ईश्वरस्य शक्तिरेव आत्मा अस्ति, इदं तु पूर्वमेव निगदितं सोऽपि देवीभागवतस्य सिद्धान्तात् भिन्नो नास्ति। देवीभागवतस्य मङ्गलाचरणे अस्ति----

''सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि ।
बुद्धिः या नः प्रचोदयात्''।

अर्थात् सर्वेषां आत्मस्वरूपं यः ईश्वरस्य पराशक्तिः विद्यते तस्याः पराशक्तेरहं ध्यानं करोमि। पूर्वे यद् मया निगदितं सा एका सगुणाशक्तिरस्ति तथा द्वितीया निर्गुणाशक्तिः। तयो याः निर्गुणा शक्ति सा आद्या नाम्ना कथिता आसीत्। देवीभागवते यत्र यत्र देव्याः वर्णनं विशिष्टातिविशिष्टरूपेण

विद्यते तत्र तत्र देवी पदात् शक्तिविशिष्टपरब्रह्मणः एव ग्रहणमस्ति। तथा द्वितीया या सगुणाशक्तिः विद्यते साऽपि पराशक्तेः रूपान्तरमस्ति। अस्माद्धेतोः देवीस्तुतिषु यत्रकुत्रापि सगुणरूपेण तथा यत्रकुत्रापि निर्गुणरूपेण वर्णनमस्ति।

## शक्तिशब्दस्य व्याख्या

शक्लृशक्तौ धातुना क्तिन् प्रत्यये सति 'शक्ति' शब्दः सिद्धो भवति। कारण, वस्तुषु यः कार्योत्पादनोपयोगि अपृथकसिद्धधर्म विशेषः वर्तते तमेव शक्तिमुच्यते। उदाहरणार्थम्--- अहभग्नेः दाहकशक्तिं गृह्णामि, साधारणतया अग्निः दाहमुत्पन्नं करोति इद सर्वं वयं जानीमः। परन्तु यत्र कुत्रापि इदमपि दृश्यते यत् अग्नेः स्पर्शं जाते सत्यपि दाहं न भवति। भारतवर्षे अस्योदाहणं बहवः मिलिष्यन्ति। दक्षिणभारते देव्याः देवतायाश्च प्रार्थनां कृत्वा अग्ने ज्वालायां मानवाः प्रविष्टाः भवन्ति इति प्रथा विद्यमानाः विद्यन्ते। अग्नौ प्रविष्टे सत्यपि दाहं न भवति इदमाश्चर्यमस्ति। केचन विशिष्टाः मानवाः रक्तलौहं स्व हस्ते स्थाप्यन्ति परन्तु तेषां हस्ता पादाः न दहन्ति चिरकालदियं मान्यता वर्तते। एकमिदमप्यस्ति यत् मणिः मन्त्रात् तथा औषधेः प्रभावात् अग्नेः स्पर्शेसति दाहमुत्पन्नं न भवति। अतः अग्नौ दाहोपयोगी एका इदृशी

शक्तिः वर्तते या मणिमन्त्रौषध्यादि प्रभावत् नष्टाः भवितुं शक्नोति तथा तस्या अभावे उत्पन्नाः भवति। मीमांसकाः इमां शक्तिं प्रधानरूपेण मन्यन्ते। अर्थात् शक्तिः इदमस्ति यत् कारणेन सह अपृथक् सिद्धेसति कार्योत्पादने उपयोगी भवति।

**या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।**
**नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।०।।**

........................................

॥ श्रीगणेशाय नमः ॥

# *प्रथमोऽध्यायः*

**देवीभागवतस्य कर्ता, तस्य संक्षिप्तमैतिह्यम् तस्य कृतित्वं व्यक्तित्वञ्च।**

## महामुनि व्यासः

प्रथमं तु कल्पशुद्धिमधिकृत्य किञ्चिद् लिख्यते---

कल्पशुद्धिशब्दस्य तात्पर्यनिर्णये विदुषामस्ति परस्परं मतभेदः। केचनकल्पशुद्धिशब्दस्थाने कल्पजोक्तिरिति पाठं मत्वा विभिन्नेषु कल्पेषहूत्पद्यमानानां पदार्थानां विवरणमित्यर्थं कुर्वन्ति । श्रीधरस्वामिना तु कल्पशुद्धिरित्यस्यार्थः श्राद्धकल्प इति कृतोऽस्ति। समीक्षचक्रवर्तिनः पं मधुसूदन झा महोदयौ तथा म०म०पं०गिरिधरशर्मचतुर्वेदमहोदयश्च मते कल्पशुद्धि-शब्देन धर्मशास्त्रस्य सर्वे विषयाः अभीष्टाः सन्ति। कल्पस्य तात्पर्यं तौ वेदाङ्गं मन्येते, यत्र श्रौत्र, गृह्य, धर्मसूत्र, सदाचार-संस्कारा अन्तर्भवन्ति। शुद्धिपदेन तौ षड्विधां शुद्धिं मन्येते।

तथाहि-मलशुद्धिः, स्पर्शशुद्धिः, अघशुद्धिः, एनः शुद्धिः, आत्मशुद्धिः, तथा मनः शुद्धिः,।

तथा च भगवता व्यासदेवेन पुराणनिर्माणावसरप्रसंगे एषां चतुर्णामाख्यनोपाख्यानगाथाकल्पशुद्धीनां सम्यगुपयोगः कृतोऽस्ति। अत इमानि सन्ति पुराणानां स्त्रोतांसि उपकरणानि उपादानानि वेत्यत्र नास्ति काचित् संशीतिः।

स्कन्दपुराणानुसारं पुराणेषु पञ्चलक्षणातिरिक्तो यावान् विवेच्यो विषयो विद्यते तावान् आख्यानपदेन प्रसिद्धोऽस्ति।

पञ्चागांनि पुराणस्य चाख्यानमितरतस्मृतम्। किन्तु मत्स्यपुराणानुसारं पञ्चलक्षणमेवाख्यानकमुच्यते---

पञ्चागांनि पुराणेषु आख्यानकमिति स्मृतम् ।।५।।

**पुराणमितिहासश्च**

पुराणसाहित्यस्येतिहासेन सह्यस्ति घनिष्ठः सम्बन्धः। प्राचीन

ग्रन्थेषु द्वयोर्नाम सम्मिलितरूपेणोपलभ्यत। छान्दोभ्योपनिषदि इयं कथास्ति यत् -- एकदा यदा देवर्षिर्नारदो ब्रह्मविद्यामध्येतुं सनत्कुमारपार्श्वे उपस्थितः तदा तेन पृष्टो यद् भवता इतः पूर्वं किं किमधीतमस्ति? तदुत्तरे स स्वाधीतविद्यासु इतिहासपुराणयोर्नाम गृहीत्वा तत् पञ्चमं वेदं प्रवोचद्

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमप्यथर्वाणमितिहासा-पुराणं पञ्चमं वेदानां वेदम् ।।४/१/६९/।।

न्यायभाष्ये वात्स्ययनेनापि विषयभेदात् साहित्यस्य त्रयो भेदाः स्वीकृताः सन्ति। (१) यज्ञः, (२) लोकचरितम् (३) व्यवहारव्यवस्थापनं च । एषु यज्ञो मन्त्रब्राह्मणात्मकस्य वेदस्य विषयः । लोकचरितमितिहासपुराणस्य विषयः। तथा व्यवहारव्यस्थापनम् , मानवानां पुण्य-पापादीनां निर्धारणस्य धर्मशास्त्रस्यास्ति विषयः।

वस्तुतो द्रष्टुः प्रवक्तुश्च दृष्ट्या एषु विषयविवेचनदृष्ट्या पार्थक्यं स्वीक्रियत। यास्काचार्येण स्वनिरूक्ते पुराणेतिहासयोर्नि-रूक्तिः कृतास्ति यत् पुरा नवं भवति पुराणम् तथा इतिहासस्य

व्युत्पत्तिः इति+ह+आस=इतिहासः (इति=एवं प्रकारम् , ह=निश्चयरूपेण आस=वर्तमानमासीत् ) एवं पुराणम् तथा इतिहासस्यार्थों भवति यः प्राचीने काले वास्तविकरूपेण घटितघटनायाः संकेतं करोति स भवतीतिहास। दुर्गाचार्येऽपि निरुक्तवृत्तौ निदानभूतः 'इति ह एवमासीत्' इति य उच्यते स इतिहासः (२/३/१/)।

स्वामीशंकराचार्येण स्वकीये छान्दोग्योपनिषद्भाष्ये उर्वशी अप्सराः पुरुरवसं चकमे (११।५।१।१।) इति शतपथब्राह्मणाधारेण उर्वशीपुरुरवसोः संवादसूचकोंऽश इतिहासो मन्यते असद्वा इदमग्र आसीत् , इत्यनुसारं सृष्टिप्रक्रियाघटित-विवरणं पुराणं प्रोच्यत। इतिहासः, इत्युर्वशीपुरुरवसोः संवादादिः, उर्वशी अप्सरा इत्यादि ब्राह्मणमेव । पुराणम् असद्वा इदमग्र आसीत् , इत्यादि। (छा०उ०शोभा० ७।१) एवं शंकराचार्यमते प्राचीनख्यानोपाख्यानसूचको भाग इतिहासोऽस्ति तथा सृष्टिप्रक्रियायां वर्णनं पुराणं विद्यतेः किन्तु सायणाचार्येण स्वकीये शतपथब्राह्मणभाष्ये एतद्विपरीतं सृष्टिप्रक्रियाप्रतिपादको ब्राह्मणभाग इतिहासः तथा उर्वशी पुरुरवसोराख्यानं पुराणं प्रोक्तं वर्तते-- आपो ह वा इदमग्रे सलिलमेवास-- इत्यादि सृष्टिप्रतिपादकं ब्राह्मणमितिहासः। उर्वशी अप्सरा पुरुरवसमैडं

चकमेइत्यादीनि पुरातनपुरुष वृत्तान्त प्रतिपादकानि पुराणम् (सा०भा० ११।५।६।८।) शुक्रनीत्यादावितिहास-पुराणयोर्लणमित्थं कृतं विद्यते---

प्राग्वृत्तकथनं चैकराज्यकृत्यमिषादितः ।
यस्मिन् स इतिहासः स्यात् पुरावृत्तं स एव हि ।।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं यस्मिन् पुराणं तद्धि कीर्तितम ।।
(शु०नी०४।९२-३)

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तं कथायुक्तमितिहासं प्रचक्षते ।।
(सं०वा०रा० ९२)

सर्गश्च प्रतिसर्गश्च वशोमन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।।
(म०पु० ५३।६)

स्कन्दपुराणे लिखितमस्ति यल्लोकगौरवादितिहासपुराणं भिन्नं भिन्नं वर्तते-इतिहास-पुराणानि भिद्यन्ते लोकगौरवात्। (कु०ख० ४०।१९८) यद्यपि आलोचकाः केवलं महाभारतमेवेतिहासं ब्रुवन्ति तथा रामायणं महाकाव्यं कथयन्ति यतो हि स्वयं महाभारते महाभारतमितिहासनाम्नाभिहितमस्ति[1]। देवीभागवतेऽपि कर्तुः श्लोकसंख्यायाश्चोल्लेखपूर्वकं महाभारतमितिहासः

प्रोक्तोऽस्ति[२]।

तथा वाल्मीकीये रामायणे प्रतिसर्गं पुष्पिकासु-इत्यार्षे वाल्मीकीये महाकाव्ये...... अमुकः सर्ग इत्युल्लिखितोऽस्ति। तथा ब्रह्मवैवर्तपुराणमपि अस्य समर्थनं कुर्वत् सिद्धान्तयति यद् महाभारतमितिहासोऽस्ति वाल्मीकीयरामायणञ्च महाकाव्यमस्ति[३]। तथापि संस्कृतसाहित्य परम्परायां रामायणमहाभारतयोरुभयोरेवेतिहासनाम्ना ख्यातिरस्ति। अतएव राजशेखरेण द्वयो सङ्ग्रहदृष्ट्या स्वकाव्यमीमांसायामितिहासो द्विप्रकारकोऽभिहितमस्ति। (१) एकनायिका कथा-यथा रामायणम् , (२) पुराकल्पः बहुनायिका कथा यथा महाभारतम्[१]।

---

१- तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्
इतिहासमिमं चक्रे पुण्यं सत्यवती सुतः ॥
जयोनामेतिहासोऽयं श्रोतव्यो विजिगीषुणा
इतिहासोन्तमादस्माज् जायन्ते कविबुद्धयः ।
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ॥०॥

२- सपादलक्षं च तथा भारतं मुनिना कृतम् ।
इतिहास इति प्रोक्तं पञ्चमं वेदसम्मितम् ॥०॥

३ इतिहासो भारतं च बाल्मीकं काव्यमेव च। (ब्र०वै० १३१।२३)

अतो रामायणमितिहासान्तर्गतं स्वीकारः, प्राचीन शास्त्रीयमर्यादानुकूलमेवास्ति। तथा च वाल्मीकीयं रामायणं वैयासिकं महाभारतञ्चेति द्वे अपि इतिहासाख्यया प्रसिद्धेस्त इति निर्विवादम्। यथा-- पुराण सर्ग-प्रतिसर्ग-वशं-मन्वन्तर-वंशानुचरितैरेभिः पञ्चभिः विषयैः सह दानव्रत-तीर्थ-धर्म-भक्तयवतारादीनामपि शिक्षां प्रदाय मानवहृदयेभ्यो मोहान्धकार-मपि निवारयति। यस्य सङ्केतो महाभारतेकृतमस्ति।

**इतिहासप्रदीपेन मोहवारणघातिना ।**
**लोकगर्भगृहं कृत्स्नं यथावत् सम्प्रकाशितम्[२] ।।०।।**

एवं संस्कृतसाहित्येतिहासे यद्यपि प्राचीनानामाख्यानानां वर्णनं करोति तथापि आधुनिकेतिहासवत् तस्य क्षेत्रं सीमितं नास्ति। किन्तु विविधविषयकलोकव्यवहार शिक्षां प्रदाय मानवहृदयेभ्योऽज्ञानावरणमपसार्य एकस्या अभिनव चेतनाया

---

१- परिक्रिया पुराकल्पः इतिहास गतिर्द्विधा ॥०॥
स्यादेकनायिका पूर्वा द्वितीया बहुनायिका । (का०मी० २)

२- अनुक्र० प० १।८७

अपि प्रकाशं प्रददाति। एवमितिहासपुराणयोर्विषयभेदेऽपि वायुपुराणभात्मानं पुरातनमितिहासं कथयति तथा महाभारतमिति-हासः सन्नपि आत्मानं पुराणं प्रख्यापयति।

इमं यो ब्राह्मणो विद्वान् इतिहासं पुरातनम्
शृणुयाच्छावयेद्वापि तथाध्यापयतेऽपि च ।।
स्थानेषु स महेन्द्रस्य मोदते शाश्वतीः समाः[1]।
द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा
सुरुर्ब्रह्मर्षिमिश्चैव श्रुत्वायदभिपूजितम्[2]।।०।।

अपि च पराशर नन्दनो भगवान् वेदव्यासो मनसि महाभारतं निर्माय तत्प्रचारोपायं चिन्तयन् सहसोपस्थितं ब्रह्माणं यद्वा निवेदयामास। भगवन्! लोककल्याणार्थं मयैकं महाकाव्यं विरचितम्। परन्तु अस्य लेखकः पृथिव्यां न कोऽप्युपलम्यते। तदा तं निशम्य विधिरादिष्टवान्। वत्स! त्वयाऽत्मीयाश्चन काव्यमुक्तम्। आजीवनं ते ब्रह्मवादिनी वाणी मिथ्या नाभवदत इतः परमिदं काव्यानाम्ना प्रसिद्धिं यास्यति। मुनिवर! एतस्य लेखनाय गणेशस्य स्मरणं कुरुष्व स एवास्य लेखको भविष्यति।

---

१- वायुपुराण ४।१०३, ४८।१०२

२- आ०प० १।१७

उवाच स महातेजा ब्रह्माणं परममेष्ठिनम् ।
कृतं मयेदं भगवन् काव्यं परम पूजितम्[1]।।०।।
परं न लेखकः कश्चिदेतस्य भुवि विद्यते ।
जन्मप्रभृति सत्यां ते वेद्मिगां ब्रह्मवादिनीम्।।०।।
त्वया च काव्यमित्युक्तं तस्मात् काव्यं भविष्यति ।
अस्य काव्यस्य कवयो न समर्था विशेषणे
काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने[2]।।०।।

इदमस्य तात्पर्यं यद् ब्रह्मणा व्यासदेवेन च महाभारतं काव्यमप्युक्तम्। एवमितिहासपुराणशब्दौ कदाचिद्भिन्नेषु भिन्नेषु अर्थेषु प्रयुज्येतेस्म। कदाचिन्नैकस्मिन्नेवार्थे उभयो प्रयोगो भवतिस्म। अतो द्वयोः परिभाषयां न कश्चन भेदो लक्ष्यते। अमरसिंहेन अमरकोषे इतिहासस्य यल्लक्षणं कृतं वर्तते तदेव लक्षणं नीलकण्ठेन स्वकीयायां भारतटीकायां पुराणस्य कृते कृतो विद्यते। इतिहास पुरावृत्तम् (अ०को० १।५) पुराणं पुरावृत्तम् (महाभारत टीका नी०क० १।५।१) एवं पुराणशब्दः द्वयोः पुराणेतिहासयोः कृतेऽपि प्रयुक्तः प्राप्यते। किञ्चिदप्याख्यानं रूपात्मकं भवेत् तथ्यात्मकं वा स्यात् परं पुराणं प्रोच्यते।

१- अनुक्र० प० १।६१

२- अनुक्र० प० २।६१-७३

अतः पुराणान्तर्गतं पुराणमितिहासश्चोभौ मन्येत। याज्ञवल्क्य-स्मृतौ विद्यानां स्थाननिर्देश प्रसंगे केवल पुराणस्य गणनाऽस्ति। यत्रेतिहासस्याप्यन्तर्भावो मन्यते विद्वद्भिः।

**पुराणन्यायमीमांसा धर्मशास्त्राङ्ग मिश्रिताः ।**
**वेदाः स्थानानि विदानां धर्मस्य च चतुर्दश[1]।।०।।**

**यथा तिथीनां हरिवासरोहि**
**यथाहि शेषः फणिनां फणीन्द्रः ।**
**यथा गरुत्मान् दिवि पक्षिणां च**
**तथा पुराणेष्विह भारतं च[2]।।०।।**

गर्गसंहितायाञ्च महाभारतं पुराणान्तर्गतमभिहितमस्ति।

यथा- तिथिनामेकादशी
नागेषु शेषनागः

पक्षिणां गरुडः, श्रेष्ठे गण्यते, तथैव पुराणेषु महाभारतं श्रेष्ठमस्ति। नारदीयपुराणानुसारं तु पुराणशब्दस्यार्थः बहुव्यापकोऽस्ति। पुराणं न केवलमितिहासमेवास्ति, अपि तु

---

१- याज्ञवल्क्यस्मृति १।१३
२- गर्ग संहिता गो०ख ६।२१,२६

तत् मानवकल्याणार्थं समस्तं संस्कृतवाङ्मयमात्मसात्कुर्वाणं सर्वहिताधनं साहित्यं वर्तते। यथा---

**श्रुणुवत्स!प्रवक्ष्यामि पुराणानां समुच्चयम् ।**
**यस्मिन् ज्ञाते भवेज्ज्ञातं वाङ्मयं सचराचरम्[1]।**

एवं पुराणस्य विशाले वाङ्मये त्रयाणां पुराण-रामायण-महाभारतानां समन्वयो जायते। महाभारतस्य श्लोकसंख्या एकंलक्षम् , पुराणानां श्लोकसंख्या चत्वारि लक्षाणि, रामायणस्य च श्लोकसंख्या पञ्चविंशतिः सहस्राणि, संकलनया सपादपञ्चलक्षश्लोकानामिदं विशालं साहित्यं पुराणनाम्ना प्रसद्धिमस्ति।

**एवं सपादा पञ्चैते लक्षा मर्त्ये प्रकीर्तिताः ।**
**पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः[2]।।०।।**

एतदतिरिक्तानामष्टादशानामुपपुराणोपपुराणादीनां यानि महापुराणानां परिशिष्टानि सन्ति तेषां संख्या सपादपञ्चलक्षात् पृथगस्ति। एवं पुराणं-वाङ्मयं विषयविस्तार दृष्ट्या

---

१- नारदपुराण १।९२।२१

२- मत्स्यपुराणे ५३।७

विश्वस्मिन्नस्मिन्नद्वितीयं वर्तते। परन्तु कौटिल्येन स्वकीयेऽअर्थ-शास्त्रे पुराणानां गणना इतिहासस्याभ्यन्तरे कृताऽस्ति। तस्य दृष्टौ इतिहासस्य क्षेत्रं पुराणक्षेत्रापेक्षयातिविस्तृतमस्ति। अत एव तेन पुराणेतिवृत्याख्यानोदाहरणधर्मशास्त्रार्थशास्त्राणि इतिहासाभ्यन्तरेऽभिमतानि---

''पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थ-
M esE eÃ esfen emeŠ[1]''

वस्तुतो मानवसमाजस्य स एवेतिहासः पूर्णः मन्तुं शक्यो यस्मिनसृष्टेरारम्भकालतः एव सृष्टिविकासस्य क्रमबद्धं विवरणमुपस्थापितं स्यात् , किन्तु आधुनिकैरितिहास लेखकैः प्रणालीयं सर्वथोपेक्षिताऽस्ति। परं महतो हर्षस्य विषयोऽस्ति यद् इंग्लैण्डस्थेन प्रसिद्धेन विदुषा एच०जी०विल्सनमहोदयेन स्वकीये ग्रन्थे[2] इतिहास स्वरूपस्य व्यवस्थापने पौराणिक्याः शैल्या एवानुसरणं कृतम् । तेन स्वकीये इतिहासे मानवसमाज-स्येतिहासो लेखनात् पूर्वं सृष्टेराम्भकालतः एव मानवविकास-

१- धर्मशास्त्रमर्थशास्त्रेतिहासः ५।१४

२- आउट लाइन ऑफ हिस्ट्री पृ० १

स्येतिहासो लिखिते वर्तते। वास्तविकरूपेण इतिहासलेखनस्यायमेव पौराणिकः प्रकारोऽस्ति।

पाश्चात्त्येषु विद्वत्सु सुप्रसिद्धस्य विदुषः पार्जिटरमहोदयस्य मतमस्ति यत् प्राचीनभारते ऐतिहासिकपरम्परा द्वयी प्रचलिताऽऽसीत्। एका वेद सम्बद्धा द्वितीया च पुराणैः सम्बद्धाऽऽसीत्। तत्राद्याः परम्परायाः प्रचारका ब्राह्मणा विद्वान्स आसन् , किन्तु द्वितीयस्याः परम्परायाः प्रचारस्य श्रेयोऽब्राह्मणानां प्राप्त आसीत्। अस्याः कल्पनाया आधारस्तेनाभिमतो यत् पुराणानां प्रचारकः तथा व्याख्यातालोमहर्षसूतः सूतजातौ समुत्पन्न आसीत्।

"क्षत्रियात् विप्रकन्यायां सूतो भवति जातितः[१]।"

एतदनुसारं प्रतिलोमविवाहद्वाराक्षत्रियाद् ब्राह्मणकन्यायां समुत्पन्ना सन्ततिः सूत इति नाम्ना व्यवन्हियते, यस्या कार्यं रथसञ्चालनादिकं वर्तते। सूतस्यान्यकार्येषु पुराणप्रवचनमपि एकं कार्यमासीत्। अस्य मतस्यानुयायिनो जना सूतोपाधिधारिणं लोमहर्षणमेतन्निकृष्ट वर्णसङ्करजातिकं मन्यन्ते। यदि स एव

---

१- मनुस्मृति १०।११

पुराणानां प्रथमः प्रचारकोऽस्ति तर्हि एतत्स्वीकाराणामनुचितं न स्याद् यत् पुराणानां प्रचारकार्येऽब्रहमणानामधिकार आसीत्।

किन्तु सावधानतया समीक्षायां क्रियमाणानां पार्जिटर-महोदयस्येयं कल्पना नितान्तंनिराधारा निर्मूला अप्रमाणिकी च सिध्याति। येन लोमहर्षणेन नैमिषारण्यक्षेत्रे समवेतानां ८८००० सहस्त्राणामृषीणां जिज्ञासापूर्तिः कृता, स सूतोऽवश्यं कथ्यतेस्म, किन्तु स उच्चकुलोत्पन्नो ब्राह्मणो ज्ञानी महाविद्वान् समादरणीयश्चासीत्। सूतनामकरणस्य कारणमिदमासीत् यत् स वेनपुत्रस्य महाराजस्य पृथोर्यज्ञेऽग्निकुण्डादुत्पन्न आसीत् । अग्निकुण्डे प्रसूतात् स संक्षेपतो जनैः सूत इति व्यवन्हियतेस्म। अतः सूतस्यापाधिरासीन्नतु स मनुस्मृत्याधारेण क्षत्रियाद् ब्राह्मणकन्यायामुत्पन्नो सूतजातीयो नासीत्। वायुपुराणे सूतस्य प्रामाणिकोत्पत्तिवर्णनप्रंसगे प्रोक्तमस्ति। यद् वेनपुत्रस्य महाराजस्य पृथो यज्ञावसरेऽग्निकुण्डात्सूतः समुत्पन्नः। देवतानां राजत्वादिन्द्र-स्य संज्ञा क्षत्रिय इत्यस्ति तथा देवानां गुरुत्वात् बृहस्पति-र्ब्राह्मणोऽभिमन्यन्तो। होतुः प्रमादादिन्द्राय दीयमानेन हविषा सह वृहस्पतेर्हविषो मिश्रणां ज्ञातम् , तस्या हुतौ सूतोऽग्निकुण्डात् समुत्पन्नः। एवं व्यत्ययेन उत्पन्नत्वात् सूतो वर्णसंकरः प्रोक्तोऽस्ति। स मनुस्मृत्याधारेण वर्णसंकरजातौ नोत्पन्न आसीत्।

वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः ।
सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम् ।।०।।
इन्द्रेण हविषा तत्र हतिः पृक्तं बृहस्पतेः ।
जुहावेम्द्राय देवेन ततः सूतो व्यजायत ।।०।।
प्रमादात्तत्र संजज्ञे प्रायश्चित्तं च कर्मसु ।
शिष्य हव्येन यत्पृक्तमभिभूतं गुरोर्हविः ।।०।।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतः[1] ।।

ब्रह्मपुराणेप्युक्तमस्ति यद्यदा पृथोर्यज्ञज्ञवसरे सूतमागधौ यज्ञकुण्डात्समुत्पन्नौ।

तस्मिन्नेव काले तु यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौतेऽह्मानि महामतिः ।।०।।
तस्मिन्नेव महायज्ञे यज्ञे प्राग्योऽथ मागधः ।
पृथोस्तवार्थं तौ तत्र समाहूतौमहर्षिभिः ।।०।।
तावुचु ऋषयः सर्वे स्तूयतामेष पार्थिवः ।
कर्मैतदनुरूपं वा पात्रं चैव नराधिपः ।।०।।
तावुचतुस्तदा सर्वास्तानुषीतन् सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयामः स्वकर्मभिः ।।०।।
न चास्य विद्मो वै कर्म नाम वा लक्षणं यशः ।

---

१- वायुपुराण ६२।४२-४३

स्तोत्रं येनास्य कुर्यावो राजस्तेजस्विनो द्विजाः ।।०।।
ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तुयतामिति।
यानिकर्माणि कृतवान् पृथुः पश्चान्महायशाः ।।०।।
ततः प्रभृति वै लोके स्तवेषु मुनिसत्तमा ।
आशीर्वादा प्रयुज्यन्ते सूतमागधवन्दिभिः ।।०।।
तयोः स्तवान्तो सुप्रीतः पृथुः प्रादात् प्रजेश्वरः ।
अनूपदेशं सूताय मागधं मागधाय च[1] ।।०।।

सूतस्योत्पत्ति विषये उपर्युक्त श्लोका उदाहरणस्वरूपेण---

ब्रह्मवैवर्तपुराणादुधृताः सन्ति।

एवमेवाक्षरशो वप्रनं वायुपुराणस्योपोद्घातपादे ६२ अध्याये १३९-१५२ श्लोकेरुपलभ्यते। विष्णुपुराणस्य प्रथमेंऽशे १३ अध्याये पृथुचरित्रावसरेऽग्निकुण्डात्सूतस्योत्पत्तिं निर्देशता भगवता व्यासेनोक्तं यत् ऋषिभिर्दत्त सूतमागधाभ्यांस्व-भविष्यस्यस्तवादेशं श्रुत्वा पृथुना चिन्तितम् यत् मनुष्यः सद्गुणैरेव प्रशंसापत्रं भवति। अतो मयाऽपि सद्गुणा अर्जनीयाः। आभ्यां स्तुतिद्वारा येषां कर्मणां वर्णनं करिष्यते अहमपि सावधानतया तथैव करिष्यामि। तदनन्तरं ताभ्यां तस्य

१- ब्रह्मवैवर्तपुराण ४।६०-६७

भाविकार्याणामाश्रयणात् सम्यक् स्तुवद्भ्यामुक्तं यदयं महाराजः सत्यवादी दानशीलो मर्यादापालको लज्जाशीलः क्षमावान् पराक्रमी दुष्टदलनकर्ता चास्ति। तथा चायं धर्मज्ञः कृतज्ञो दयावान् मितभाषी मुनीनामकः यज्ञपरायणः ब्रह्मण्यः साधुसमाजसम्मानितः तथा व्यावहारिक दृष्ट्या साधुषु मित्रेषु च समस्वभावो वर्तते। एवं प्रकारं सूतमागधद्वारा वर्णिता गुणा राज्ञां पृथुना धृता, तदनुसारं कार्यं च कृतम्।

**सूतः सूत्यां समुत्पन्नः सोतेऽहानि महामतिः ।**
**तस्मिन्नेव महायज्ञे यज्ञे प्राज्ञोऽथ मागधः ।।०।।**
**सूनेनोक्तान् गुणानिव्यं स तदा मागधेन च ।**
**चकार हृदि ताहक् च कर्मणा कृतवान् स वै[1] ।।०।।**

अन्यच्च भविष्यपुराणं हि ब्राह्मणद्वारा पठितस्य पुराण-श्रवणस्याधिकारं प्रददाति, किन्तु न स्वयं शूद्रस्य पठनाधिकारं ददाति। अतः पार्टिजरमहोदयस्यानर्गलप्रलापं को वा विद्वान् स्वीकर्तुं शक्नोति! न च तस्यास्ति विद्वत्समाजे किमपि मूल्यम्।

**अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना।**
**श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन[1] ।।०।।**

---

१- वायुपुराण १।१३।५१-६४

लोमहर्षणसूतस्य सूनुरुग्रश्रव अपि पुराणानां व्याख्याता आसीत्। यः सौतिरुक्तो महाभारते--- "लोमहर्षणपुत्र उग्रश्रवा सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे[२]" स च राज्ञः परीक्षितः पुत्रं जनमेजयं हरिवंशं श्रावयामास। यथा-- द्रोणस्यापत्यं पुमान् द्रौणिर्दशरथस्यापत्यं दाशरथिः कथ्यते तथैव सूतस्यापत्यं पुमान् सौतिरुच्यते। अतो लोमहर्षणसूतस्य पुत्रत्वादुग्रश्रवा अपि सौतिरुक्तोऽस्ति। सौतिशब्दस्य व्याकरणव्युत्पत्तौ ध्याने दीयमाने स्पष्टं प्रतीयते यदत्र सूतो व्यक्तिवाचकः शब्दोऽस्ति न चास्ति स जातिवाचक शब्दः, यतो हि अत इञ् ४।१।९४ इति पाणिनीय सूत्र द्वारा व्यक्तिवाचकात् शब्दादेव इञ् प्रत्ययो जायते। न तु जातिवाचकात् शब्दादपि इञ् प्रत्ययो भवति। अतो ब्राह्मणजातौ उत्पन्ना व्यक्तिर्ब्राह्मण एव कथ्यते न तु ब्राह्मणिः। अतो लोमहर्षतसूतव्यक्तेरुत्पन्नत्वात् उग्रश्रवाः सौतिरुच्यते इति हरिवंशटीकायां स्पष्टमुक्तमस्ति--- "अग्निजो लोमहर्षणः"। "तस्य पुत्रः सौतिरुग्रश्रवाः, न तु ब्राह्मणयां क्षत्रियात् सूतः इति स्मृत्युक्तः। "तद्धितानर्थक्यापत्तेः।।१।।४।।

---

१- प्र०स०प० ९।५।

२- महा० आ०प० ४।१।

अत एव पौराणिकानां डिण्डिम घोषोऽस्ति--

''अग्निकुण्ड समुद्भूतः सूतो निर्मलमानसः''

महाभारतस्य प्रसिद्धटीकाकर्तुर्नीलकण्ठस्य तथा श्रीमद्भागवतस्य व्याख्यातुः श्रीधरस्वामिनश्चापि स्पष्टं मतमस्ति यत् पुराणप्रवक्ता सूतो ब्राह्मण एव आसीत्।

कौटिल्येन स्वकीयेऽर्थशास्त्रे शङ्करजातीनामुत्पत्तिवर्णन प्रंसगे लिखितमस्ति, यद्---

''वैश्यान्मागधवैदेहकौ (क्षत्रियाब्राह्मण्योः) क्षत्रियात् (ब्राह्मण्यां) सूतः। पौराणिकस्तु अन्यः सूतो मागधश्च। ब्राह्मणात्। क्षत्राद्वा विशेषः।[१] अस्यायं निष्कर्षोऽस्ति यत् कौटिल्य दृष्टौ वैश्यजातिपुरुषात् क्षत्रियजातिस्त्रियामुत्पन्ना वैश्याद् ब्राह्मण्यामुत्पन्नो वैदेहकः प्रोच्यते, पौराणिकौ सूतमागाधौ तु इतो भिन्नो ब्राह्मणक्षत्रियाभ्यां श्रेष्ठौ स्तः। अनयोः सूत जातितो न कोऽयस्ति सम्बन्धः। अत एव भ्रमवशात् नैमिषारण्ये

१- अर्थशास्त्र (कौ०) ३-७।२९-३१

व्यासासने कथां कथयति लोमहर्षणे सूते हते बलरामस्य ब्रह्महत्या जाता यन्निवारणार्थं तेन प्रायश्चित्तस्वरूपं भारतस्य सम्पूर्णेषु तीर्थेषु यात्रा कृता। तदुक्तं तत्रत्यैः ऋषिभिः---

**अजानता वाचरितस्त्वया ब्रह्मवधो यथा ।**
**योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः[१]।।०।।**

पुराणेषु क्वचित् क्वचित् सूतसय प्रतिलोमजकथनरहस्यमिदमस्ति यत् महाराजस्य पृथोः यज्ञे इन्द्राहुत्या वृहस्पतेराहुतेरभिभूततया लोमहर्षणस्थ सूतस्योत्पत्या वर्णवैजात्यं जातम्। यज्ञीयपरिभाषानुसारं बृहस्पतिरस्ति ब्राह्मणः, इन्द्रश्च क्षत्रिय उच्यते। एतदभिप्रायेणैव वृहन्नारदीये पुराणे स्वयं सूत आत्मानं विलोमजमुक्तवान्।

"विलोमजोऽपि धन्योऽस्मि यन्मां पृच्छथ सत्तमाः"[२]

वस्तुतो लोमहर्ष सूतस्तु योनिजो नासीत् तथापि तस्मिन्

१- श्रीमद्भागवत १०।७।३१।

२- वृहन्नारद पुराण २।५

प्रतिलोमजो लाक्षणिकः प्रयोगोऽस्ति। वास्तविकरूपेणेदमस्ति तत्त्वमत्र यद् भगवान् व्यासो लोमहर्षणं सूतमितिहासपुराणमध्याप्य तत्प्रचाराय प्रसाराय च तमेव नियुक्तवानासीत् , यतो हि स ज्ञानी महाविद्वानग्निकुण्डात् प्रसूतो ब्राह्मण जातीय एवासीत्। ब्राह्मण एव पौराणिको भवितुमर्हतीत्यस्य स्पष्टमुल्लेखोऽग्नि पुराणे वर्तते।

**पृषदाज्यात्समुत्पन्नः सूतः पौराणिको द्विजः ।**
**वक्ता वेदादि शास्त्राणं त्रिकालानल धर्मवित्[१] ।।०।।**

एभिः प्रमाणै यदि सूत उच्चकोटिको विद्वान् तथा ब्राह्मणः सिध्यति तर्हि पार्टिजरसाहस्येदं कथनं कथंकारं रचीकर्तुं शक्यते यद् ब्राह्मणद्वारा पुराणानां प्रचारो जात इति।

वस्तुतः पुराणेषु सूतानां कार्यस्य तथा क्षेत्रस्य मिश्रणं जातमस्ति। प्राचीनं भारते सूतः प्रतिलोमजा जातिरासीत्। या मनुस्मृत्यानुसारं प्रतिलोम विवाहकारणात् क्षत्रियाद् ब्राह्मणकन्या-यामुत्पन्ना व्यक्तिरासीत्। इतो भिन्नः सूतशब्दस्य प्रयोगे

---

१- अग्निपुराण १५७।७९

रथचालनकायापि भवतिस्म। वायुपुराणे च सूतो देवर्षि राजर्षीणाञ्च वंशज्ञाता प्रोक्तोऽस्ति।

**स्वधर्मं एव सूतस्य सद्भि दृष्टः पुरातनैः ।**
**देवानां च ऋषीणाञ्च राजा चामिततेजसाम्[1] ।।०।।**

वंशानां धारणं कार्यं श्रुतानां च महात्मनाम्। राजामृषीणाञ्च वंशावल्या सुरक्षाया उत्तरदायित्वं न केवलं सूते एव सीमितमासीत् , अपि तु हरिवंशस्यारम्भे विस्तरतो वृष्णिवंशं कथयितुं प्रार्थयन् जनमेजयः सिद्धवक्तारं वैशम्पायनं वंशकुलं राज्ञा वंशप्रत्यक्ष दर्शिनमपि कथयति।

**भवांश्च वंशकुशलस्तेषां प्रत्यक्षदर्शिवान् ।**
**कथयस्व कुलं तेषां विस्तरेण तपोधन[2] ।।०।।**

आत्मनोऽध्ययनस्य परम्परां व्यञ्जयता उग्रश्रवसा सूतेनोक्तं यद् अद्भुतकर्मशीलेन महर्षिणा वेदव्यासेन चतुर्लक्षश्लोकेषु निबद्धानि अष्टादशपुराणानि मर्त्यलोकस्य प्राणिनां कल्याणाय मम पितरं लोमहर्षणसूतं प्रति कथितानि आसन् , मम पिता

---

१- वायुपुराण १।१।३२।

२- हरिवंश पर्वणि १।१६।

च तान्येव पुराणानि मामध्यापयामास। साम्प्रतमहं तानि पुराणानि युष्मान् युष्मान् श्रावयामि। यानि भवद्भिः मम पितुः मुखाच्छ्रुतानि आसन्। एतेन स्पष्टं प्रतीयते यद् राजगृह सम्पर्के स्थितेषु विद्वत्सु ब्राह्मणेष्वपि देवर्षि राजवंशानां क्रमज्ञानस्योत्तर दायित्व-मासीत्। लोमहर्षणसूतस्य पुत्रः उग्रश्रवा सौतिः पुराणानां ज्ञातावक्ता तथा महान् कथाकुशलो विद्वानासीत्। तेन पुराणविद्यायां महान् परिश्रमः कृत आसीत् तथा तेन स्वपितुरेव पुराणानामध्ययनं कृतमासीत्। एकस्मिन्नहनि स नैमिषारण्ये द्वादशवर्षैः सम्पद्यमाने सत्रे यदा महर्षयः दैनिकं कृत्यं समाप्य विश्रामं कुर्वाणा आसन् तदा विनीतयावेनोपस्थायाञ्जलिं बद्ध्वा तान् नैमिषारण्य वासिनो मुनीन् अभिवाद्य कुशलप्रश्नानन्तरं प्रोवाच महर्षयः! किं श्रोतुमिच्छन्ति! अहं कस्मिन् प्रसंगे प्रवच्मि! तच्छ्रुत्वा तैरुक्तम् --- लोमहर्षणकुमार! पूज्यपादः कुलपतिः शौनकः साम्प्रतमग्निमुपासनायां संलग्नो वर्तते। स हि देवासुरसम्बन्धिनीर्वह्वीः कथा जानाति। मनुष्य-नाग गन्धर्वाप्सरसां कथाभिः सह पूर्णपारितोऽस्ति। स श्रुति-स्मृति पुराणेतिहासनामाचार्य एवास्ति। स हि सर्वेषामस्माकं सम्माननीयो विद्यते। अतो यावत् स नायाति तावद् भवता विश्रामो विधेयः। तस्मिन्समागते स यत् प्रक्ष्यति तमेव तत एवमस्तु-इत्युक्तवा स सौति विश्रामं कर्तुमारब्धवान्।

मुनिकुलमुनिः विप्रशिरोमणिः महामुनिः शौनकः क्रमशः समस्तानि यज्ञकर्माणि सम्पाद्य तत्र स्थाने समागतो यत्रोत्तम व्रतधारी महर्षिगणो यज्ञमण्डपे उग्रश्रवसः सौतेः समीपे विराजमान आसीत्। तस्मिन्समागते ते ऋषिभिः तस्याभ्युत्थानं कृत्वा तस्मिन्नुपविष्टे स्वस्वासने समुपविष्टम्। ततः शौनकोऽब्रवीत् तात। पुरा भवतः पितृपादैः सर्वेषां पुराणानां विधिवदध्ययनं कृतमासीत्। किं भवाताऽपि तेषां समेषां विधिवदध्यनं कृतं वर्तते। पुराणेषु विपुला कथाः कथिताः विद्यन्ते, धार्मिकाणां राजर्षीणां तथा तपः पूतानां महर्षीणां च वंशा अपि वर्णिताः सन्ति, ये चास्माभिः भवतः पितुः श्रीमुखाच्छ्रुताः सन्ति। इदानीं तेषु भवतो मुखाविन्दात् सर्वप्रथमं विश्वविख्यातं भृगुवंश वर्णनं श्रोतुमिच्छामो वयम्। अतः कृपया भवता साम्प्रतं तत्सम्बद्धा एक कथा कथनीया। वयं सर्वे भवतः कथां श्रोतुमुद्यताः स्मः। इदं सर्वं निशम्य उग्रश्रवसा सौतिना विशुद्धान्तः करणानां तेषां तस्यां विशालायां सभायामित्थं प्रोक्तम् ---
भृगुनन्दन! वैशम्पायनादिभिः श्रेष्ठैः ब्राह्मणैः यानि पुराणानि सम्यक् पठितानि तथा तैः यादृशं तेषां पुराणानां वर्णनं कृतमस्ति तत्सर्वं मया ज्ञातमस्ति। मम पित्रा च यस्याः पुराणविद्याया अध्ययनं कृतमासीत्। सा मयाऽपि तत एव पठिता तथा श्रुता चास्ति। भवद्भिरादौ तस्य भृगुवंशस्य वर्णन श्रोतव्यं योहि देवर्षिभि राजर्षिमरुद्गणै प्रशंसितोऽस्ति।

तथा पुराणश्रवणेन संयुक्तोऽस्ति। मया श्रुतमस्ति यत् स्वयम्भुवा ब्रह्मणा वरुणस्य यज्ञे महर्षिर्भृगुरग्नितः समुत्पादित आसीदतो महर्षिः भृगुर्महान् तेजस्वी महर्षिजातो---

**भृगुर्महर्षि र्भगवान् ब्रह्मणा वैस्वयम्भुवा ।**
**वरुणस्य क्रतौः जातः पावकादिति नः श्रुतम्**[१] ।।०।।

महर्षेर्भृगोराश्रमः तस्य पश्चिमसमुद्रस्य तटे वर्तमान आसीत् यत्र नर्मदानदी समुद्रेण मिलति, तस्य प्राचीनं नाम भृगुकच्छ आधुनिकं च नाम भडौच इति विद्यते, योहि गुर्जरप्रान्ते सूरतेनगर समीपेऽस्ति। महर्षे भृगोर्द्वे भार्ये आस्ताम् एका दिव्या द्वितीया च पुलोमा। तत्र दिव्यायाः पुत्र आसीत् शुक्राचार्यस्तथा पुलोमायाः पुत्र आसीत् महर्षिच्च्यवनः। इक्ष्वाकु-पुत्रेण शर्यातिना स्वकीयायाः सुशीलायाः कन्यायाः विवाहश्च्वनेन मुनिनासह कृतः, या हि स्ववैंद्यावश्विनीकुमारौ स्वपातिव्रत्येन सन्तोष्य तयोरनुकम्पातश्च्यवनं मुनिं प्रापितवती। च्यवनात् सुकन्यायां प्रमतिः प्रादुर्भूतः, येन घृताच्या अप्सरसा सह विवाहं कृत्वा रुरुनामकः पुत्र उत्पादितः। रुरोः पत्वीजाता

१- म०भा०आ०प० ५।७

प्रमद्वरा, यस्या गर्भतः शुनकः समुत्पन्नः अस्यैव शुनकस्य पुत्रो जातो महर्षि शौनकः, येन महाभारतकथां कथयितुमुग्रश्रवसं सौतिं प्रार्थयामास। तदनुसारं तेन महत्या प्रसन्नतया तदुत्तमतमं महाभारताख्यं महाख्यानम् (इतिहासम्) आदित एव उपक्रम्य कथितं यत् कृष्णद्वैपायनस्य महर्षे व्यासस्य परममभिप्रेत-मस्ति---

**हन्त ते कथयिष्यामि महादाख्यनमुत्तमम्**
**कृष्ण द्वैपायन मतं महाभारतमादितः[1] ।।०।।**

## अग्रे वेदव्यासस्य परिचयः

**विभज्य वेदं च तदर्थ जातं चक्रे परामृश्य पुन पुराणम् ।**
**तदीयमर्थञ्च विकृष्य चक्रे यो भारतं तत्र मनो ममास्ताम् ।।०।।**

व्यापरेयुगे महर्षि व्यासः पराशमुनि द्वारा निषादराजस्य पोष्यपुत्र्यां राज्ञ उपर्चारवसोवीर्यजायां मत्स्यगन्धायां नाम्ना च सत्यवत्यां भगवतो विष्णोरंशेन समुत्पन्न आसीत। तस्य जन्म

१- म०भा०आ०प० ५९।९

यमुनानद्या वदरीप्राये द्वीपे जातत्वाद् द्वैपायनो वादरायणो वेदानां विस्तारकरणात् वेदव्यासः कृष्णवर्णत्वाच्च कृष्णद्वैपायनोऽभवत्---

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशरात् योगी व्यासख्यां कलया हरेः[1] ।।०।।
पराशरस्य वीर्येण पुत्रमेकमवाप्स्यसि ।
द्वीपे तु बदरीप्राये बादरायणमच्युचम्[2] ।।०।।
द्वीपे जातो यतो बालः तेन द्वैपायनोऽभवत् ।
वेदशाखाविभाजनाद्वेदव्यासः प्रकीर्तितः[3] ।।०।।
द्वापरान्ते तु विश्वात्मा विष्णुर्विश्वम्भरः प्रभुः ।
व्यासनाम्ना चरत्वस्मिन्नवतीर्य महीतले ।।०।।
स पुनर्द्वापरे चास्मिन् कृष्णद्वैपायनाख्यया ।
अरण्यामिव हव्याशी सत्यावत्यामजायत ।।०।।
संक्षिप्य स पुनर्वेदांश्चतुर्धा कृतवान् मुनिः ।
वेदव्यस्त तयालोके वेदव्यास इति श्रुतः[4] ।।०।।
शि०पु०वा०सं० १।३४-३६

---

१- श्रीमद्भागवत १।४।१४

२- मत्स्य पु० १४।१५

३- देवीभागवत २।३।४१

४- शिवपुराण उ०सं० ४४।४४

वीर्यं तेजो बलं चाल्यं मनुष्याणामवेक्ष्य च ।
हितायसर्वलोकानां वेदभागान् करोति सः[1] ।।०।।
पराशरात् सत्यवत्यामंशांश कलया विभुः ।
अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम्[2] ।।०।।
विष्वंशसम्भवो व्यास इति पौराणिका जगुः ।
द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा
वेदमेकं तु बहुधा कुरुते हित काम्यया ।।०।।
अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ ।
पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे[3] ।।०।।
द्वीपे न्यस्ततया वालसतसमाद्वैपायनोऽभवत् ।
जातमात्रो जगामाशु वृद्धिं विष्णवंशयोगतः ।।०।।
एवं द्वैपायनो यज्ञे सत्यवत्यां पराशरात् ।
चकार वेदशाखाश्च प्राप्तं ज्ञात्वा कलेर्युगम् ।।०।।
वेदविस्तारकरणाद् व्यासनामाऽभवन्मुनिः ।
पुराणसंहिताचक्रे महाभारतयुत्तमम्[4] ।।०।।
अष्टादशपुराणानि कृत्वा सत्यवती सुतः ।
भारताख्यानममलं चक्रे तदुपवृंहितम्[5] ।।०।।
पुराणकर्ता पुत्रस्ते भविष्यति वरानने ।
वेदविद् भागकर्त्ता च ख्यातश्च भुवनत्रये[6] ।।०।।
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इनिहासमिमं चक्रे पुण्यं सत्यवती सुतः[7] ।।०।।
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम्[8] ।।०।।

१- विष्णु पु० ३।३।६।

२- श्रीमद्भागवत १२।६।४९।

३- देवीभागवत १।३।१९-२०

४- मत्स्य पुराण ५३।६९।

५- देवीभागवत २।२।४१-४४।

६- देवीभागवत २।३।३४।

७- म०भा०आ०प० १।५४।

८- म०भा०आ०प० ६२।५२।

कूर्मपुराणे कृत द्वैपायनो व्यासः साक्षाद् विष्णुप्रोक्तोऽस्ति।

**कृष्णद्वैपायनो साक्षाद् विष्णुरेव न संशयः ।**
**को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम्[1] ।।०।।**

कौरवपाण्डवाभ्यां सह भगवतो व्यासस्य निकटतमः सम्बन्धः आसीत्। अस्यैव कृपया धृतराष्ट्रस्य पाण्डोः ज्ञानिनो विदुरस्य चोत्पत्तिरजनि। स समये समये स्वयं समुपस्थाय पाण्डवेभ्यः समुपदेशं प्रदाय धैर्यं धत्तुं शिक्षयतिस्म। स हि भारताद् युद्धाद् विरतये कौरवान् बहुशो बोधितवान् , किनतु तैर्दु बुद्धया तदुपदेशो नाभिमतः। जन्मान्तरीय कथाप्रबोधन द्वारा तस्य प्रयत्नेन द्रौपद्याः पञ्चभिः पाण्डवैः सह पञ्चसु दिनेषु। विवाहो जातः। एवं भगवान् व्यास एकः सत्पक्षपाती महान् व्यक्तिरासीत्।

भगवतो व्यासस्य जनकः पराशरो मुनिस्तथा पुत्रोऽमलात्मा श्रीशुकदेवमुनिरपि पुराणानां प्रचारे प्रसारे च महान्तं सहयोगं दत्तवन्तौ। मैत्रेयमुनेः प्रश्नानन्तरं पराशरेण मुनिना तमुद्दिश्यं विष्णुपुराणस्य प्रवचनं कृतम्।[2] अमलात्माना

---

१- कू०पुराण ३०।६७।

२-सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते।
पुराणसंहितां सम्यक् तां निबोध यथायथम् ।।
(वि०पु० १।१।३०।)

महामुनिना श्रीशुक्राचार्येणापि ब्रह्मशापसन्तप्तं समुद्विग्रमनसं राजानं परीक्षितं श्रीमद्भागवतसप्तहि श्रावयित्वा तदज्ञानं दूरीकृतम, येनोपकृतः स स्वयं राजा परीक्षित् सञ्ज्ञातज्ञानः सन् साञ्जलिरुक्तवान्-----

एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्
व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादमूलमुपसृत्य नतेन मूर्ध्ना
बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ।।०।।
सिद्धोऽस्म्यनुगृहीतोऽस्मि भवताकरुणात्मना ।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ।।०।।
अज्ञानञ्च निरस्तं मे ज्ञानविज्ञान निष्ठया ।
भवता दर्शितं क्षेमं परं भगवतः पदम्[१] ।।०।।

वस्तुतः पुराणानां प्रणयनस्य श्रेयः स्वयं भगवतो व्यास्यास्ति, प्रवचन-प्रचार-प्रसाराणां श्रेयस्तत्पितुः पराशरमुनेस्तथा पुत्रस्य श्रीशुकदेवस्यास्ति। अतो व्याकरणस्य त्रिमुनिवत् पुराणस्यापि त्रिमुनित्वमिति कथन मनुचितं नास्ति। श्रीव्यासस्य वंश इयान् निर्मलः परोपकारी विद्यावदातो ज्ञानविज्ञानसम्पन्नश्च विद्यते, यस्य चर्चा संस्कृतवाङ्मयस्य प्रतिशाखं जाताऽस्ति।

१- श्रीमद्भगवत १२।६।१-७

महर्षिर्वशिष्ठस्तु लोकलोकपितामहस्य ब्रह्मणो मानसः पुत्रएवास्ति। अस्मात् सत्यामरुन्धत्या श्रेष्ठ शक्तिमुनिर्जातः। शक्तेरदृश्यन्तां पराशरमुनिर्जन्म लेभे। पराशराद् योजनगन्धायां नाम्ना काल्यां (सत्यवत्यां) भगवान् वासुदेवः समुत्पन्नः। व्यासमुनेररण्यां महाज्ञानी अमलात्मा श्रीशुकदेवमुनिर्जातः----

**अरुन्धत्यां वशिष्ठस्तु सुतानुत्पादयच्छतम् ।**
**ज्यायसोऽजनयच्छक्तेरदृश्यन्ती पराशरम् ।।०।।**
**काली पराशरज्जज्ञे कृष्णं द्वैपायनं प्रभुम् ।**
**द्वैपायनो ह्यरण्याञ्च शुकमुत्पादयत् सुतम्[1] ।।०।।**

एवं महर्षिर्वेव्यासो वसिष्ठस्य प्रपौत्रः शक्ते पौत्रः पराशरमुनेः पुत्रः श्रीशुकदेवस्य च जनकोऽस्ति, यस्य वन्दनायामधस्तनः श्लोक एव पर्याप्तोऽस्ति, महाभारतस्त शान्तिपर्वणो मोक्ष-धर्मेऽपि----

**वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ।**
**पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।।०।।**
**व्यासं वसिष्ठ नप्तारं शक्तेः पुत्रमकल्मषम् ।**
**पराशरात्मजं वन्दे शुकतातं तपोनिधिम्[2]।।०।।**

१- लिंगपुराण पू० ६३।८३-८४।

२- म०भा०शा०मो० ३४९।७।

एवम्भूतस्य परमपवित्रस्यापूर्वप्रतिभासम्पन्नस्य महात्मनो ज्ञानाब्धि रत्न शिरोमणेर्विद्वत्कुलमणेः महाज्ञानिनोऽवतारिणो महर्षेर्भवतो व्यासदेवस्य परिचयदानं मानवबुद्धेः परं विद्यते। भगवान् सूतोऽप्यस्य परिचयमेवं दत्तवानस्ति।

विष्णोरंशो मुनिर्जातः सत्यवत्यां पराशरात् ।
विभज्य वेदाश्चतुरः शिष्यानध्यापयत् पुरा ।।०।।
अष्टादशपुराणानि स कृत्वा भगवान् मुनिः ।
मामेवाध्यापयामास भारताख्यानमेव च[1] ।।०।।

व्यासेन कृत्वातिशुभं पुराणं
शुकाय पुत्राय महात्मने यत् ।
वैराग्ययुक्ताय च पाठितं वै
विज्ञाय चैवारणिसम्भवाय ।।०।।
सुतेन पृष्टः सकलं जगाद
द्वैपायनस्तत्र पुराणगुह्यम् ।
अयोनिजेनाद्भुतबुद्धिना वै
श्रुतं मया तत्र महाप्रभावम्[2] ।।०।।

पद्मपुराणे यथा स्वर्लोके देवानां मध्ये इन्द्रस्तस्माच्च देवगुरु-र्बृहस्पतिः सर्वश्रेष्ठोऽस्ति तथैव भगवान् वेदव्यासः समस्तेषु

१- देवी भागवत १।१४।१७।

२- देवी भागवत १।३।३६-३८।

मुनिषु श्रेष्ठतमो ब्रह्मवित्तमश्च प्रोक्तोऽस्ति----

यथा व्यासो मुनीन्द्रेषु व्यासेषु ब्रह्मवित्तमः ।
यथा दिवौकसां शक्रो गुरु शक्राद् यथा वरः[१] ।।०।।

महाभारतस्य शान्तिपर्वणि तु वैशम्पायनेन भगवान् व्यास आदिपुरुषान्नारायणाद् षष्ठ उक्तोऽस्ति----

पितामहाद् यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्याशजमेकपुत्रं
द्वैपायनं वेदमहाविभूतिम् ।।०।।

व्यासस्य वंशपरम्परायाः विवरणं प्रस्तूयते

नारायणः
|
ब्रह्मा
|
वसिष्ठः
|
शक्तिः
|
पराशरः
|
व्यासः
|
शुकदेवः

---

१- उ०ख० १९२।२९।

असाधारणप्रतिमसय युगविधायकस्य भगवतो व्यासस्य निवासभूमि विषये न कोऽपि प्रमाणिकः सङ्केत उपलभ्यते। महामनस्विभिर्मनीषिभिस्तस्य विषये य उल्लेखः कृतोऽस्ति, तेनापि तस्य सर्वाङ्गीण जीवनस्याभासो भवति। तथापि सूत्रात्मक सङ्केतेन प्रतीयते यत्तस्योत्तराखण्डस्य तपः पूतेन भूभागेनासीद् घनिष्ठतमः सम्बन्धः।

**पुण्ये हिमवतः पादे मध्ये गिरी गुहालये ।**
**शुचिः स नियमो व्यासः शान्तात्मा तपसि स्थितः[1] ।।०।।**

महाभारतस्य सभापर्वणि धर्मराजाययुधिष्ठिराय स्वेन्द्रियजयपूर्वकं सावधानतया सुसम्यक् प्रजापालनस्य सदुपदेशं प्रदाय वेदमार्गनुयायिभिः शिष्यैः साकं कैलासगमनस्यास्ति निर्देशः।

**स्वस्तितेसतु गमिष्यामि कैलासं प्रर्वतं प्रति ।**
**अप्रमत्तः स्थितो दान्तः पृथ्वीं परिपालय ।।०।।**
**एवमुक्त्वा स भगवान् कैलासं पर्वतं ययौ ।**
**कृष्णद्वैपायनो व्यासः सह शिष्यैः श्रुतानुगैः[2] ।।०।।**

---

१- म०भा०आ०प० १।२८।

२- महाभारत सभापर्व ३४९।१७,८१।

अपि च शान्तिपर्वाणि मोक्षधर्मे व्यास विषये जनमेजयेन पृष्टो वैशम्पायन प्रोवाच-- यत्तपोनिधिर्ब्रह्मनिष्ठो मे गुरुर्भगवान् व्यासदेवो वेदार्थज्ञानोपवृंहणकामनया हिमालयशिखरे निवसन् महाभारतं विरचितवान्। तपसि श्रान्तस्य तस्य सेवायां तत्परा वयं पञ्च (शुक-पैल-जैमिनि-सुमन्तु-वैशम्पायनाः) तेन सहैव तत्र स्थिता आस्म। अस्माभिः परिवृतो गुरुदेवस्तस्मिन् हिमवतः शिखरे भूतगणैः परिवृतो भूतनाथ इव शोभमानस्तत्र साङ्गस्य वेदस्य महाभारतस्य चार्थानावर्तयन्नस्मानध्यापयतिस्म। वयञ्चसत-मुद्यताः तमुपासमाना अध्ययनकार्ष्म----

**वेदार्थान् वेत्तुकामस्य धर्मिष्ठस्य तपोनिधेः ।**
**गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ।।०।।**
**वेदानावर्तयन् साङ्गान् भारतार्थाश्च चिन्तयन् ।**
**तमेकमनसं दान्तं युक्ता वयमुपास्महे[१] ।।०।।**

तस्मात्तस्य निवासभूमिरुत्तरापथो हिमालय एवासीत्तथा तस्याश्रमोऽपि भारतस्य पवित्रे वदरिकाश्रम आसीदिति निश्चेतुं शक्यते। यतः समये समये समागत्य स धर्मात्मनः पाण्डवानुपदिशतिस्म।

---

१- श्रीमद्भागवत ३४९।९-१३।

वनापर्वणः ८३अध्याये कुरुक्षेत्रस्य सीम्नि व्यासस्थली-व्यासवनयोश्चर्चाऽस्ति यत्र पुत्रशोक सन्तप्तो हि व्यासो देहत्यागायोद्यतो जातः, परं दैवैर्निवारितः। श्रीमद्भागवतानुसारं तु सरस्वती नदी पश्चिम वदरीवृक्षमण्डिते वदरिकाश्रमनाम्नाऽपि प्रसिद्धे शम्याप्राप्ते तसयाश्रम आसीत् यत्र नारदे निर्गते मनः प्रणिधाय मायापुरुषयोदर्शनानन्तरं सर्वानर्थ निवर्तकं भक्तिप्रधानं श्रीमद्भागवतं विरच्य शुकमध्यापयत्।

**ब्रह्मनद्याः सरस्वत्या आश्रमः पश्चिमे तटे ।**
**शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्द्धनः ।।०।।**
**तस्मिन् स्व आश्रमे व्यासो बदरीखण्डमण्डिते ।**
**आसीनोऽपि उपस्पृश्य प्रणिदध्यौ मनः स्वयम्[1] ।।०।।**

व्यासस्य वादरायण इति नाम महत्वपूर्णस्यैतिहासिकतथ्यस्य परिचायकमस्ति। अनेन स्वकीय ज्ञानस्योद्भावना हिमालयस्याङ्के वदरिकाश्रमे एव स्थित्वा कृता। तस्य बादरायणनामकरणं बदरिकाश्रमस्य पवित्रभूमौ चिरन्तनसहवासस्य स्मारकमस्तीति वाचस्परि गौरेला[2]।

---

१- श्रीमद्भागवत १।७।२,३।

२- संस्कृत साहित्य का इतिहास पृ० २३३-२३४ ।

अहिर्बुध्न्य संहितायां भगवतो व्यासस्य नामान्तरमपान्तर-मपान्तरतमा इत्युक्तोऽस्ति। यो वेदव्याख्यातृरूपेण स्मृतः, कपिलहिरण्यगर्भयोः समकालिकश्च प्रोक्तो विद्यते। एभिस्त्रिभिर्भगवतो विष्णोराज्ञया क्रमशः त्रय्याः सांख्यशास्त्रस्य योगदर्शनस्य च विभागो विहितः (११।५०-६०।) एवं भारतीय वाङ्मये भगवान् व्यासो विशालसाहित्यकार रूपेणको-ऽवतारी महापुरुषोऽभिमतः, परन्तु वेदिककालतः पुराणकाल-पर्यन्तमेकस्यैतादृशस्य दीर्घजीविनो मनुष्यस्यासम्भवं मान्यमानाः कतिपयेऽनुसन्धित्सवो विदेशीया विद्वांसो व्यास इत्यभिधानमस्वी-कृत्य प्रतीकात्मकं भावात्मकं कल्पनात्मकं वा नाम कथयन्ति।[१] मैकडोनलस्याप्येतदेव मतमस्ति[२]। अत एतेषां मतानुसारं व्यासशब्दो जातिपरम्परायाः, शिष्यपरम्पराया, वंशपरम्परायाः सम्प्रदायपरम्पराया उपाधिपरम्पराया वा पर्यायवाची शब्दोऽस्ति। न संज्ञा वाचकः। एवमलवेरुणिना व्यासः पराशर मुनेः पुत्रः प्रोक्तस्तथा[३] कीथ-मैकडोनलाभ्याञ्च पाराशर्यो व्यास एकः पौराणिको महापुरुषः स्वीकृतोऽस्ति[४]।

---

१- डब्लू हाँपकिन्सः इण्डिया ओल्ड एण्ड न्यू पृ० ६९।

२- ए०ए०मैकडोनल-इण्डिया पास्ट पृ० १४९।

३- अलवेरुनी का भारत भा०२ पृ० ३७।

४- मैकडोनल एण्ड कीथ, वैदिक इन्डेक्स पृ० ३३९।

विष्णुपुराणानुसारं इदं समस्तं जगद् भगवतो विष्णोरेवोत्पद्यते, तत्रैव तिष्ठति, अन्ते च तत्रैव प्रविलीयते। अत एतदतिरिक्तमन्यत् किमपि न वास्तविकं विद्यते। प्रतिद्वापरं भगवान् विष्णुर्व्यासरूपेणावतीर्य मनुष्याणां बलं वीर्यं तेजश्चाल्पं ज्ञात्वा सर्वेषां जनानां हिताया वेदविभाजनं कुरुते। अष्टादशानां पुराणानां च निर्माणं विधत्ते। अस्य वैवस्वतमन्वन्तरस्य प्रतिद्वापरम् एकैको व्यास उत्पद्यते। इदानीं यावत् २८ व्यासाः सञ्जाताः सन्ति। तत्र प्रथमे द्वापरे स्वयं ब्रह्मा व्यासो जातः। तृतीय द्वापरस्य व्यासः शुक्राचार्यो जातः। एवं चतुर्थे वृहस्पतिः, पञ्चमे सूर्यः षष्ठे मृत्युः, सप्तमे इन्द्रः, अष्टमे वसिष्ठः एवं प्रकारेण प्रत्येकस्मिन् द्वापरे (सप्तविंशतिपर्यन्तम्) भिन्न भिन्न नाम्ना व्यासोऽभूत्। अस्मिन्नष्टाविंशे द्वापरे सत्यवती पुत्रः कृष्ण द्वैपायनो व्यासो जातोऽस्ति--- विव्यासभेदान् यस्मात् स तस्माद् व्यास इति स्मृतः'' (म०भा०१आदि प० ६१।८८। एवमिदानीं यावत् २८ व्यासाः जाताः सन्ति ये प्रतिद्वापर वेदविभागं पुराणनिर्माणं च कृतवन्तः। इतः परं द्रोणाचार्य-पुत्रोऽश्वत्थामा व्यासो भविष्यति[१]।

---

१- वि०पुराण ३।३।५-१७।

अस्मिन्नाष्टाविंशतितमे द्वापरे समुत्पन्नः कृष्णद्वैपायनो व्यासः, अष्टादश पुराणानि, महाभारतम् , वेदविभागम् , ब्रह्मसूत्रनिर्माणम् , योगभाष्यम् , च कृत्वाऽस्माकं महान्तमुपकारं कृतवान्। भगवान् कृष्णद्वैपायनः साक्षान्नारायणो ज्ञेयः, यतो हि एतदतिरिक्तः कः पुमान् इयद् विशालं दिव्यं साहित्यं निर्मातुं शक्नुयात्।

**कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।**
**कोऽन्यो भुवि मैत्रेय महाभारतकृद्भवेत्[1] ।।०।।**

पुराणानां कर्ता, वक्ता, श्रोता च

अष्टादशानां महापुराणानामादिकर्ता ईश्वरावतारः सत्यवती गर्भसंभवः पराशरमुनि पुत्रो भगवान् कृष्ण द्वैपायनो महर्षि र्व्यासोऽस्ति।

पुराणानामदि वक्ता लोमहर्षणाः सूतः तथा तत्पुत्रः उग्रश्रवाः सूतश्चास्ति।

---

१- वि० पुराण ३।४।५।

पुराणानामादि श्रोतारो नैमिषारण्य निवासिनो निर्मलमानसाः परोपकारिणः शौनकप्रभृतयोऽष्टा शीति सहस्राणि (८८०००) ऋषयः सन्ति।

# *द्वितीयोध्यायः*

"देवीभागवतोक्त विशिष्ट विषयाणां परिचिन्तनम्"

अस्य प्रबन्धस्य द्वितीयोऽध्याये "देवीभागवतोक्त विशिष्ट विषयाणां परिचिन्तनम्" इति विषयः निर्धारितो वर्तते, तमधिकृत्य परिचिन्तनं करोम्यग्रे---

देवीभागवतस्य प्रथमस्कन्धे यानि विशिष्ट विषयाणि सन्ति तानि सर्वाण्युपरि किंचिदुल्लेखं करोमि। यथा---

मत्स्यपुराणम् , मार्कण्डेयपुराणम् , भविष्य-पुराणम् , श्रीमद्भागवतम् , ब्रह्मपुराणम् , ब्रह्माण्डपुराणम् , ब्रह्मवैवर्तपुराणम् ,वामनपुराणम् , वायुपुराणम् , विष्णुपुराणम् वाराहपुराणम् , अग्निपुराणम् , नारदपुराणम् , पद्मपुराणम् , लिङ्गंपुराणम् , गरुड़पुराणम् , कूर्मपुराणम् , स्कन्दपुराणम् श्लोकानां संख्या भिन्नाः भिन्नाः वर्तन्ते।

१- मत्स्यपुराणेषु चतुर्दशसहस्रात्मकाः श्लोकाः सन्ति।

२- मार्कण्डेयपुराणस्य श्लोकसंख्या नवसहस्त्रं वर्तन्ते।

३- तत्त्वदर्शिनः मुनिगणाः भविष्यपुराणस्य श्लोक संख्यायाः गणना चतुर्दशसहस्रात्मकाः तथा पञ्चशती (१४५००) वर्तन्ते।

४- पुण्यमयं श्रीमद्भागवस्य श्लोकसंख्या अष्टादशसहस्रात्मकाः सन्ति।

५- ब्रह्मपुराणस्य श्लोकसंख्या दशसहस्राः वर्तन्ते।

६- ब्रह्माण्डपुराणस्य द्वादश सहस्राः श्लोकाः वर्तन्ते।

७- अष्टादशसहस्रश्लोकेषु ब्रह्मवैवर्त पुराणं पूर्णं विद्यन्ते।

८- वामनपुराणे दशसहस्राः श्लोकाः विद्यन्ते।

९- वायुपुराणे चतुर्विंशतिसहस्राः षट् अशीति श्लोकाः (२४६००) विद्यन्ते।

१०- विष्णुपुराणस्य त्रयोविंशति सहस्राः श्लोकाः।

११- वाराहपुराणस्य चतुर्विंशति सहस्राः श्लोकाः।

१२- अग्निपुराणस्य षोडशसहस्राः श्लोकाः सन्ति।

१३- नारदपुराणस्य पञ्चविंशतिसहस्राः श्लोकाः।

१४- पद्मपुराणस्य विशदवर्णनं पञ्चपञ्चाशत् सहस्रात्मक श्लोकेषु सम्पन्नमभूत्।

१५- लिङ्गपुराणस्य एकादशसहस्राः श्लोकाः।

१६- गरुणपुराणस्य संख्याश्लोकानां उनविंशतिसहस्राः वर्तन्ते।

१७- कूर्मपुराणेषु सप्तदशसहस्रात्मकाः श्लोकाः विद्यन्ते।

१८- परमाद्भुतो स्कन्दपुराणस्य श्लोकानां संख्या एकविंशति सहसात्मकेषु वर्तन्त।

अनेन प्रकारेण पुराणानां नामानि तथा उपर्युक्त पुराणानां श्लोसंख्यायाः विवेचनं कृतम्। अनेनैव प्रकारेणोपपुराणान्यपि सन्ति----

सनत्कुमारं प्रथमं नारसिंहं ततः परम् ।
नारदीयं शिवं चैव दौर्वाससमनुत्तमम् ।।
कापिलं मानवं चैव तथा चौशनसं स्मृतम् ।
वारुणं कालिकाख्यं च सांबं नंदिकृतं शुभम् ।।
सौरं पाराशर प्रोक्तमादिव्यं चातिविस्तरम् ।
माहेश्वरं भागवतं वासिष्ठं च सविस्तरम् ।
एतान्युपपुराणानि कथितानि महात्मभिः ।।०।।

श्रीमद्देवीभागवते ये विषयाः वर्तन्ते तान्युपरि विशेषरूपेण निवेचनमग्रे करिष्ये, यथा----

अग्रे ममनसि इदमायाति यत् आधुनिके युगे मानवाः चिन्तयन्ति यत् विना पुत्रेण गतिर्नभवति अतः पुत्रस्य कामनया अनेकोपायाः कुर्वन्ति जनाः। परन्तु मया उवलोकितम् यत् प्राचीने युगेऽपि ईदृशी दशा विद्यमाना आसीत्। यथा श्रीमद्देवीभागवते विशिष्टविषयेष्विद मस्ति-- एकदा महामुनि व्यासो चिन्तामग्नो आसीत् तस्मिन्नेव समये नारदः समुपस्थितो भूत्वा व्यासेनापृच्छत् भो मुनेः! कथं चिन्तितो भूत्वा तिष्ठति। तदा व्यासः कथितः यत् पुत्रं विना गतिर्न भवति अतः कं देवं उवाच यथा त्वं अयं विषयः समुपस्थापितः तथैव मम पितुः ब्रह्मा भगवतो हरिणा सम्मुखे सैव विषय=अपृच्छत्।

ब्रह्मा उवाच यत् भवान् देवानामध्यक्षाः जगतस्वामीच तथा भूतभविष्यवर्तमानस्य ज्ञाता वर्तन्ते। जीवानामेकमेव त्वमेव शासकः अतः कमीश्वरं प्रार्थये। भवतां नाभिकमलात् ममोत्पत्तिः जाता तथा अखिल विश्वस्य रचयिता भवान् अतः यं देवं प्रार्थये तस्य विषये ज्ञानाय ममेच्छा जागर्ति अतः कथ्यताम्। ब्रह्मन्! सावधानतया शृणु। मम मनसि यं विचारमस्ति तं

व्यक्तं करोमि। देवाः दानवाः मानवाश्च सर्वे जानन्ति यत् त्वं सृष्टिकर्ता, अहं पालनकर्ता, शिवः संहारकर्ता, वर्तन्ते। परन्तु वेदज्ञातारः पुरुषाः स्व युक्तया इदं सिद्धं कुर्वन्ति यत् सृष्टिः, पालनं, संहारं एवां त्रयाणां या योग्यता वयं प्राप्ताः तस्याः योग्यताया अधिष्ठात्री शक्तिदेवी सन्ति, तस्या एव कृपया उपर्युक्त योग्यता वयं प्राप्ताः। अस्मात् कारणात् शक्तयाधीनो भूत्वा अहं तां भगवतीं शक्तिं निरन्तरं ध्यानं करोमि। मयि ज्ञाने इदमस्ति। यत् भगवत्याशक्तया अग्रे अन्यः कश्चिद्देवो नास्ति यस्याराधनया कार्यं सम्पनं भविष्यति, अतः देव्या आराधनमेव सर्वश्रेष्ठं श्रेष्ठतरं श्रेष्ठतमं च विद्यते। अस्य गुप्तरहस्यस्य वक्ता भगवान् विष्णुः तथा श्रोता ब्रह्मा आसीत्। नारदेन अक्षरशः सर्वमिदं वृत्तान्तं महामुनिं व्यासमश्रावयत्। ततो व्यासः स्वाभिलाषापूरणार्थं गिरौ तपसे प्रययौ।

अग्रे श्रीमद्देवीभागवतस्य प्रथमस्कन्धे त्रिविधसाहित्यस्य, त्रिविधश्रवणस्य तथा पुराणस्य श्रेष्ठतयाः यत्प्रतिपादनं विद्यते तस्य विवेचनं सम्यक् प्रकारेण कर्तुं शक्यते। एकदा महामुनिसूतस्य मुखात् निष्क्रानतः यत् प्रलयकालपश्चात् सर्वत्रैव जलमेव जलमासीत् तस्मिन्नेवसमये भगवतो विष्णुना सह मधुकैटभयोः सार्द्धं पञ्चवर्षसहस्रकं तस्मिन् महावर्णवे युद्धं

जातम् अत्र ऋषीणां प्रश्नः भवति यत् महापराक्रमी अजेय श्री विष्णुः तयो सार्द्धं कथं युद्धं कृतः। तस्मिन्नेकार्णवे जले तौदानवौ कस्माज्जातौ अस्य प्रश्नस्य सम्यगुत्तरं वयं वाञ्छामि। भवान् प्रसिद्धो वक्ता उपस्थितः। पञ्चेन्द्रियेषु नेत्रौ कर्णौ च सर्वाधिककल्याणकारिणी इन्द्री वर्तेते। श्रवणात् वस्तोः विज्ञानं भवति। दर्शनाच्चित्तरं जनम् भवति। श्रवणमपि त्रीणी प्रकाराणि भवन्ति, सात्विकं, राजसं तामसं च। विज्ञपुरुषा अन्यत्र अस्य विषयस्य वास्तविकं विवेचनं कृतमासीत्। ते वेदशास्त्रादेः श्रवणं सात्विकम् , साहित्यस्य श्रवणं राजसम् , युद्धवार्ता एवं परदोष प्रकाशनं तामसमस्ति। प्रज्ञावद्भि पण्डितैः सात्विकं श्रवणं त्रिविधं प्रोक्तम् , उत्तमं मध्यमं निकृष्टञ्च।

**उत्तमं मोक्ष फलदं स्वर्गदं मध्यमं तथा ।**
**अधमं भोगदं प्रोक्तं निर्णीय विदितं बुधैः ।।०।।**

साहित्यमपि त्रयः प्रकाराः भवन्ति, यथा---

यस्यां स्वनायिकायाः श्रृंगार वर्णनमस्ति उत्तमं साहित्यमस्ति। यस्य साहित्यस्य वाराङ्गनायाः श्रृंगार-वर्णनेन सम्बन्ध अस्ति स साहित्यः मध्यमः, तथा परोढायाः श्रृंगार-वर्णनेन यस्य साहित्यस्य सम्बन्धः सः अधमः मन्यते। शास्त्रदर्शिभिः विद्वद्भिः

तामसं त्रिविधं प्रोक्तम्। विद्वान्सः आततायिनि युद्धं यत् तदुत्तमुच्यन्ते। शत्रुताजातेसति अरिभिः सह यः युद्धः प्रारम्भो भवति स मध्यमः यथा पाण्डवैः सह अभूत्। विनाकारणं विादमुत्थापिते जाते योहि प्रसङ्ग अस्ति स अधम अस्ति। अत एव अस्माकं विचारे इदमायाति यत् उपर्युक्तं सर्वं परित्यज्य पुराणश्रवणमेव कर्तव्यम्। यः सर्वश्रेष्ठो वर्तते सिद्धोप्यस्ति। पावनप्रसङ्ग श्रवणेन शेमुषी वर्द्धते पाप प्रणाशनमपि भवति।

ऋषीणां प्रश्नानामुत्तरमग्रे सूत ददाति, यथा---

प्राचीन समये त्रिलोकी जलमग्नोऽभूत् , तस्मिन्समये भगवान् विष्णुः शेषशय्यायामुपरि शेते तत्र भगवतः कर्णमलेन द्वौ दानवौ उद्भूतौ तयोः नाम मधुकैटभौ इति। तस्मिन्महार्णवे तौ महाकायौ दैत्यौ क्रीडासक्तौ भूत्वा विचचार यत्---

**''नाकारणं भवेत्कार्यं सर्वत्रैषा परम्परा''।**
**आधेयं तु विनाधारं न तिष्ठति कथंचन ।।०।।**

अतः आधाराधेय भावः सर्वथा सिद्धोऽस्ति। तदनन्तरमेव कैटभः विचारितः यत् अस्मिन् जले आवाम् सत्ता स्यातुं

महाबलाशक्तिरेवात्र वर्तते। तस्या शक्तौ महाबला अस्ति सा शक्तिः कदापि नहि नष्टा भवति। मन्मता तु सैव शक्तिः अस्य कार्यस्य कारणमस्ति। सा परमाराध्या शक्तिरेव ममोत्पत्तौ कारणमस्ति। तस्मिन्नेव मध्ये सुमनोहरं ''वाग्बीजं'' ताभ्यां श्रुतम्। राक्षसो कैटभः शक्ति उपस्थापितः सा का शक्तिः, तस्य विचारे सा परमाध्या शक्ति इति। अत्र अस्माकं विचार इदमस्ति----

शक्तिनाम्नः वस्तोः प्रत्येक जनानामनुभवं कर्तुं शक्यते यत् शक्तिं विना नहि कोऽपि कार्यं कर्तुं समर्थो भवति। एकदा एकः मनुष्यः रुणो भूत्वा शय्यायामुपरि शेते तस्य द्वारे कश्चिदागत्य आह्वायति भो मित्र! बहि आगम्यताम् , रुग्णो मनुष्य उच्चस्वरेण वदति भो मित्र! वहि आगन्तुं नाहं समर्थः अतः अन्त एव आगच्छ। अनेन प्रकारेण इदमायाति यत् रुग्णमनुष्यस्य कथनेन स्पष्टो भवति यत् शक्ति एकः वस्तु विद्यते यया विना मनुष्यः शय्यात् उत्थाय वहिः गमनेऽसमर्थः। रुग्णमनुष्यस्य शक्तिः क्षीणा जाता परन्तु तस्मिन् जीवनमस्ति। शक्तजीवन् सन्नपि शक्तिं विना किञ्चिदपि कार्यं न भवति, अनेन सिद्धो भवति यत् शक्तिद्वारा एव सर्वं कार्यं सेत्स्यति। तथापि विचारणीयोऽयं विषयः यत् यदि

शक्तया सर्वं कार्यं भवति तर्हि शक्तस्य का आवश्यकता। परन्त्वित्यमपि नास्ति शक्तिः स्वतन्त्रो नास्ति तथा शक्तिं विना शक्तः स्वतन्त्ररूपेण किञ्चित्कार्यं कर्तुं न शक्नोति उपर्युक्त कथनेनेदं सिद्धं भवति यत् शक्तिः तथा शक्तस्य सम्बन्धात् प्रत्येक कार्याणि सिद्धानि भवन्ति। सौन्दर्यलहर्यां प्रथम श्लोके शंकराचार्येणोक्तम् ----

शिवः शक्तया युक्तो यदि भवति शक्तः प्रनवितुम्[१]। ब्रह्म, परमात्मा, चिति आदि शक्तस्य नाम। मायाशक्ति, प्रकृति आदि शक्तेः नाम। अग्नौ दाह शक्तिरस्ति। तस्याः दाहशक्तेः अग्निना सह यथा सम्बन्धोऽस्ति। तथैव सम्बन्धः ब्रह्मणः ब्रह्मणः शक्तया सह सम्बन्धः वर्तते। अग्रेः दाहशक्तिः अग्निना पृथग् नास्ति तथैव ब्रह्मणशक्तिरपि ब्रह्मणः पृथग् नास्ति। शक्तिः चिदानन्दस्वरूपिणी अस्ति तथा परमात्मनः सत्तात् सृष्ट्यादयः सर्वं कार्यं करोति।

शक्तः शक्ति विषये संक्षिप्तं विवेचितं मया। अग्रे इदमस्ति यदा मधुकैटभः सहस्त्रवर्ष पर्यन्तं तां शक्तिं प्रसन्नार्थं

---

१- सौन्दर्यलहरी १,

तपस्यां कृतौ ततः शक्तिः प्रसन्नोभूत्वा वरं दत्तम् तं किम् वरम् , स्वेच्छामरणस्य वरं दत्तं शक्तिः। तदा मधुकैटभौ ब्रह्मा पार्श्वे गत्वा युद्धं कुरु इति गदितम्। ब्रह्मा सर्वं विचार्य विष्णुः पार्श्वे गतवान् , तत्र विष्णु गाढनिद्रामवाप्तवान्। तदा ब्रह्मा विष्णोः जागरणार्थं स्तुतिमारब्धवान्।

देवि त्वमस्य जगतः किल कारणं हि
ज्ञातं मया सकलवेदवचोभिरम्ब ।
यद्विष्णुरप्याखिलोकविवेककर्ता
निद्रावशं च गामितः पुरुषोत्तमोऽध ।।०।।
को वेदते जननि मोहविलास लीलां
मूढोऽस्म्यहं हरिरयं विवशश्च शेते ।
इहक्तया सकलभूतमनो निवासे
विद्वत्तमो विवुधकोटिषु निर्गुणायाः[1] ।।०।।
सांख्या वदंति पुरुषं प्रकृति च यां
तां चैतन्यभावरहितां जगतश्च कर्त्रीम् ।
किं तादृशासि कथमत्र जगन्निवास
श्चैतन्यताविरहितो विहितस्त्वयाद्य ।।०।।
नाट्यं तनोपि सगुणा विविधप्रकारं
नो वेत्ति कोऽपि तव कृत्यविधानयोगम् ।
ध्यायंति यां मुनिगणा नियतं त्रिकालं
संध्येति नाम परिकल्प्य गुणान्भवानि ।।०।।

---

१- श्रीदेवीभागवत् १स्कन्ध अ० ७। श्लोक २७,२८।

बुद्धिर्हिबोधकरणा जगतां सदा त्वं
श्रीश्चासि देवी सततं सुखदा सुराणाम् ।
कीर्तिस्था मतिमृतौ किल कांतिरेव
श्रद्धा रतिश्च सकलेषु जनेषु मातः ।।०।।

अनेन प्रकारेण ब्रह्मा द्वाविंशति श्लोकद्वारा स्तुतिमकरोत् तथापि विष्णोरूपरि योगनिद्रायाः यो हि प्रभाव आसीत् सा तथैवास्ति अर्थात् विष्णोः जागरणं न जातम्। आश्चर्योऽयं विषयः वर्तते यत् यो हि विष्णुः सर्वशक्तिमान् उच्यते। वेदाः शास्त्राणि पुराणानि च तथा विराजनानां अयमेव निर्णय अस्ति यत् ब्रह्मा, विष्णुः, शंकरश्च एते त्रयः सनातनदेवाः सन्ति। एषामतिरिक्तः ब्रह्माण्डे नहि कोऽपि देवः सर्वसमर्थो विद्यते। ब्रह्मा समस्त विश्वस्य सृष्टिं कुर्वन्ति। जगदस्य संरक्षणं विष्णोरधीनमस्ति। प्रलयस्यावसरोपरि शंकरः संहारकर्ता विद्यते। अस्य जगदप्रपञ्चस्य इमे देवाः कारणानि सन्ति। यद्यपि एते देवाः वास्तविकरूपे एक एव सन्ति परन्तु कार्यवशात् सत्व, रज तमो गुणान् स्वीकृत्य ब्रह्मा-विष्णु शंकरनाम्ना विख्याताः भवन्ति। एषु त्रयेषु परमपुरुषः विष्णुः सर्वश्रेष्ठाः विद्यन्ते। भगवान् विष्णुः वेदेषु सर्वान्तर्यामी एवं सर्वेषां रक्षकः कथितमासीत्। अतः सर्वे मानवाः नारायणस्य चरणे एव मस्तकं दत्वा उपासनां कुर्वन्ति। तथापि योगनिद्रावशे विष्णुः संजातः अतः विचारणीयोऽयं विषयः यत् योगनिद्रा अर्थात् आद्याशक्तिरेव

सर्वा अस्ति नहि तत्समक्षे कोऽपि देवः समर्थ यः विना आद्यशक्ति समर्थवान् भविष्यति। तथैव शंररस्यापि स्थितिः वर्तते। सूर्यः जगतं प्रकाशयति। शेषनागः कच्छपश्च पृथ्वीं धारयतः। अग्नौ दाहकताशक्तिः, समीरे प्रेरणात्मिके। सर्वेषु या विराजमाना शक्तिः सैवाद्याशक्ति अस्ति। तस्या एव प्रभावेण शिवमपि शिवतां प्राप्नोति। यस्योपरि तस्याः कृपा न भवति स कोऽप्यस्ति शक्तिहीन अस्ति। अतः सर्वेषां देवानामुपरि शक्तिरेव प्रभावः यया सर्वे शक्तिमान् उच्यन्ते अस्मात् कारणात् शिवशक्ति एकमेव इति कथनमेव सर्वोचितमस्ति।

शिवशक्ति विषयमवलम्ब्य किंचित् स्वोपज्ञ विचारः प्रस्तूयते। शिवः शक्तिमान् अस्ति, तस्मात् शक्तिः भिन्ना न वर्तते। अधिष्ठानात् अध्यस्तस्य सत्ता भिन्ना नास्ति सातु अधिष्ठानरूपा एवास्ति। शिवो एकरसः अपरिणामी च। तथा च शक्तिः परिणामी अस्ति। इदं जगत् परिणामीशक्ते एव विलासः वर्तते। शिवात् शक्ते आविर्भावादेव त्रयो लोकाः चतुर्दश भुवनानि उत्पन्नानि भवन्ति। यदाशक्तेः तिरोभावं भवति तदैव जगदस्यात्यन्तमभावो भवति। वेदान्ते इदं वाक्यं स्पष्टीकृतं वर्तते श्लोकेन----

शक्ति जातं हि संसारं तस्मिन् सति जगत्त्रयम् ।
तस्मिन्क्षीणे जगत् क्षीणं तच्चिकित्स्यं प्रयत्नतः ।।०।।

शिवस्य आद्यस्पन्दरूपा अव्यक्तशक्तिः भक्तानां भावनानुसारमेव अनेकान् व्यक्तरूपान् धारयति। यथा--- दुर्गा, महाकाली, राधा, ललिता, त्रिपुरा, महालक्ष्मी, महासरस्वती, अन्नपूर्णा इत्यादि। क्रियाया अनुसारे शक्ति अनेक नाम्ना प्रसिद्धः। शिवादस्य भिन्ना सत्ता नास्ति अस्मात् कारणादेव शिवस्य शक्तिः कथयन्ति बुधैः। अस्य जगदस्यो त्पन्नकरणार्थं विशेषक्रिया शक्तौ वर्तते अतः इमाम् प्रकृतिमुच्यते। इमाम् अघटनघटनापटीयसी अपि उच्यते। यत्र कश्चिदपि पदार्थः विद्यमानः नास्ति तत्रेयम् क्षणभङ्गुरादेव अनेकान् पदार्थान् विद्यमानं करोति, अस्मात्कारणात् इयं अविद्या अपि अस्ति शंकराचार्य्य भणति।

अव्यक्तनाम्नी परमेश शक्ति
रनाद्यविद्या त्रिगुणात्मिका परा ।
कार्यानुमेया सुधियैवमाया
यथा जगत्सर्वमिदं प्रसूयते ।।०।।

अययमेव विषयः भगवतो श्रीकृष्ण गीतायामपि कथयन्ति यथा----

ममयोनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।।०।।
सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ।।०।।
मायाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ।।०।।
यावत्संजायते किञ्चित्सत्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञ संयोगात्तद्विद्धि भरतर्षभ ।।०।।

विद्यारण्यमुनिना अपि इत्थमुच्यते----

''न केवलं ब्रह्मैव जगत्कारणं निर्विकारत्वात्।
नापि केवलं शक्तिः कारणं स्वातन्त्र्याभावात् ।
तस्मादुभयं मिलित्वैव जगत्कारणं भवति।''

अनेन कारणेन सिद्धं भवति यत् उभयोः सम्मेलनेन संसार उत्पन्नो भवति। अधोलिखितेषु मन्त्रेषु स्पष्टं भविष्यति।

मायां तु प्रकृतिं विद्यन्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।।०।।
न तस्य कार्यं कारणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्यशक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।।०।।

ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः ।।०।।

विज्ञपुरुषाः तस्याः शक्तेः विषये उभयस्यापि कल्पनां कुर्वन्ति। सगुणा-निर्गुणा च। भोगस्येच्छा कर्तारः सगुणाया उपासनां कुर्वन्ति। विरागिणः निर्गुणायाः उपासनां कुर्वन्ति। सा शक्तिः शान्तस्वरूपा धर्म, अर्थ, काम, मोक्षस्य स्वामिनी वर्तते। विधिपूर्वकं उपासनाकरणेन सर्वेमनोरथा सुलभाः भवन्ति। सा आद्याशक्तिः परब्रह्मस्वरूपा एवं सनातनी विद्यते। कदापि तस्य अवसानो न भवति। अतः इदमस्ति यत् शक्तिरेव सर्वोपरि ज्ञातव्यम्।

अनेन प्रकारेण बहुविधरूपेण यदा ब्रह्मा योगनिद्रायाः स्तुतिमकरोत् तदा विष्णोः जागरणं जातम् , तदनन्तरं मधुकैटभ्यां सह युद्धो अभूत् तस्मिन्युद्धे उभयोः वधः विष्णुना कृतम्। तदनन्तरं उभयो दैत्ययोः रक्तैः सम्पूर्णं समुद्रं रक्तयुक्तमभूत्। तस्मिन्समयादेव पृथिव्याः नाम मेदिनी जाता अतः मृत्तिकायाः भक्षणं निषेधो वर्तते।

श्रीमद्देवीभागवते एवमस्ति---

मेदनीति ततो जातं नाम पृथ्व्या समंततः ।
अभक्ष्या मृत्तिका तेन कारणेन मुनीश्वराः ।।०।।

श्रीमद्देवीभागवते प्रथमस्कन्धे दशम, एकादश, द्वादश त्रयोदशोऽध्याये च निम्नलिखिताः विषयाः वर्तन्ते----

१- महामुनि व्यासस्य तपस्या।

२- भगवतो शिवस्य वरदानम्।

३- राजा सुघुम्नस्य इलानामक स्त्रीरूपे परिणतिः।

४- पुरूरवस उत्पत्तिः।

५- सुघुम्नस्य देव्योपासना तथा भगवत्याः कृपया सुघुम्नं परमधामप्रप्तिः।

६- राजा पुरूरवां उर्वश्याः प्राप्तिः तथा प्रतिज्ञाभङ्गकारणात् उर्वशी राजापुरूरवसं परित्यज्य गमनम्।

एकस्मिन् समये सत्यवतीनन्दनो व्यासस्य मनसि इदमायाति यत् पुत्रस्य कामनया तपस्या कर्तव्यम्। तदा तपस्या करणार्थं मेरुगिरेः रमणीय शिखरोपरि अगमत्। तत्र कठिनतपस्य आरब्धवान्। व्यासस्य मनसि भूयोभूयं विचारमुत्थितः यत् शक्तेः उपासना भवितव्यम्। यः शक्तेः पूजनं क करोति जगति तस्य निन्दा भवति। शक्ते उपासका आदरं प्राप्नुवेन्ति। तस्य मेरुगिरे उपरि व्यासस्य तपस्या करणेन सम्पूर्णजगति प्रकाश अप्रसरत्। व्यासस्य तेजं दृष्ट्वा शचीपतिः इन्द्रः भयमाप। इन्द्रः शिवस्य पार्श्वेगतः, शिवोवाच भो इन्द्र! कथं भीतोऽसि, सुरेश्वर! ते दुःखं किम्।

शिवो वाच--

**अमर्षो नैव कर्तव्यस्तापसेषु कदाचन ।**
**तपश्चरन्ति मुनयो ज्ञात्वा मां शक्तिसंयुतम्[1] ।।०।।**

इयं कथा अग्रे अधिका वर्तते अतः विस्तरभायादत्र संक्षेपत एव अलिखत्। अत्र एकः विचार उपस्थितः यत् व्यासः पूर्वं कथितम् यत् शक्ति उपासकाः आदरं प्राप्नुवन्ति अतः अग्रे शक्ति उपासकानां विषये किंचित् स्व विचारं भणामि----

१- श्रीमद्देवीभागवत १स्क० अ०१० श्लो०१५।

महाभारतस्य समये कुरुक्षेत्रे यदा भगवान् श्रीकृष्णः कौरवसेनां युद्धाय उद्यतोऽवलोकितः तदा अर्जुनेन कथितः यत् भो अर्जुन! दुर्गामुपासनां अर्थात् स्तवनं कुरु, भगवतः वाक्यं श्रुत्वा अर्जुनः भगवत्याः देवी दुर्गायाः स्तवनं प्रारब्धवान्।

नमस्ते सिद्धसेनानि आर्येमन्दरवासिनी ।
कुमारिकालि कापालि कपिले कृष्णपिङ्गले ।।०।।
भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तुते ।
चण्डि चण्डे नमस्तुभ्यं तारिणी वरवार्णिनी ।।०।।
कात्यायानि महाभागे करालि विजये जये ।
शिखिपिच्छध्वजधरे नाना मरणभूषिते ।।०।।
अदृशूलप्रहरणे खङ्गखेटकधारिणी ।
गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोप कुलोद्भवे ।।०।।
त्वं ब्रह्मविद्या विद्यानां महानिद्रच देहिनाम् ।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनी ।।०।।
स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती ।
सावित्री वेदमाता च तथा वेदान्त उच्यते ।।०।।
तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्य विवर्धिनी ।
भूतिर्भूतिमतां संख्ये वीक्ष्यसे सिद्धचारणैः ।।०।।

भो सिद्ध-समुदाय नेत्री आर्ये! त्वं मन्दराचलस्य विपिने निवासं करोति। तव कौमार (ब्रह्मचर्य) व्रतमक्षुण्णं विद्यते। त्वं कालशक्तिः एवं कपालधारिणी भव। त्वमहं नमस्कारं करोमि।

---

श्रीमहाभारत भीष्मपर्व अ०२३श्लोक ४,५,६,७,११,१२,१६ ।

अनेन प्रकारेण बहुविध रूपेण यदा अर्जुनः स्तुतिमकरोत् तदा भगवती दुर्गा अर्जुनस्य भक्तिं ज्ञात्वा कृष्णस्य सम्मुखे आकाशे स्थित्वा उवाच। भो पाण्डुनन्दन! त्वं स्वयमेव नर असि तथा दुर्द्धर्ष नारायण तव सहायको वर्तते, अतः त्वं अल्पसमयमेव शत्रूणामुपरि विजयं प्राप्स्यसि। इदं कथयित्वा सा वरदायिनी देवी तत्क्षणादेवान्तर्हितो जाता।

**स्वल्पेनैव कालेन शत्रूञ्जेष्यसि पाण्डव ।**
**नरस्त्वमसि दुर्द्धर्ष नारायण सहायवान् ।।०।।**
**अजेयस्त्वं रणेऽरीणामपि वज्रभृतः स्वयम् ।**
**इत्येव मुक्तवा वरदा क्षणेनान्तरधीयत् ।।०।।**
**लब्ध्वा वरं तु कौन्तेयो मेने विजयमात्मनः ।**
**आरुरोह ततः पार्थो रथं परमसम्मतम् ।।०।।**

उपर्युक्त महाभारत वृत्तान्तस्य इदं निश्चयो भवति यत् आद्याशक्तिरेव सर्वेषां शक्तिस्ति। श्रीमद्देवीभागवतस्य प्रथमस्कन्धस्य १४, १५, १६, १७, १८, १९, विंशतिचाध्यायस्य या कथा तस्याः कथाया संक्षिप्तमितिवृत्तं लिखित्वा तदनन्तरं तस्याः कथायाः मध्ये यान् विशिष्ट विषयान् सन्ति तासामुपरि किञ्चिद्वैशिष्ट्यं लेखयिष्ये।

---

१- श्रीमहाभारत भीष्मपर्व अ०२३श्लो०सं०१८,१९,२० ।

चतुर्दश पञ्चदशोऽध्याये श्रीशुकदेवस्य जन्म, महामुनि व्यास द्वारा शुकस्य विवाहार्थं अस्तावो कृतः परन्तु शुकः न स्वीकृतः, तदनन्तरं वटपत्रोपरिस्थितः बालरूपभगवान विष्णो कथा,।

सर्वप्रथमं शुकदेवस्य जन्म विषये किंचित्संक्षिप्तं विवरणं प्रस्तौमि। एकस्मिन्समये महामुनि व्यासस्यसम्मुखे घृताची नाम्नीदेवकन्या समागता तां दृष्ट्वा महामुनि व्यासा चिन्तापरोऽभवत्। इयं देवकन्याअप्सराः भयभीताः। विचारिता यत् मुनि शापं मा विसृजेत् अतः सा भय विह्वला स्वरूपं शुकीरूपं कृत्वा तमेव समक्षे निर्गता। तां पक्षीरूपे दृष्ट्वा व्यास अतिविस्मितं जातम्। अप्सरां दर्शनेनैव सहैव मुनेः शरीरे कामस्य संचारणमभूत्। तस्मिन्समये व्यास अग्निः प्रकटनार्थ अरणिमन्थनं कर्तुं सन् अकस्मात् सहसा तस्य शुक्रमपतत् "तस्माच्छुकः समुद्भुतो व्यासकृति मनोहरः" विस्मयन्जनयन्बालः संजातस्तदरण्यजः" यथाध्वरे समिद्धोग्निर्भाति हव्येन दीप्तिमान्" व्यासस्तुसुतमालोक्य विस्मयं परमं गतः" किमेतदिति संचित्य वरदानच्छिवस्य वै"।

दिव्यतेजात् सम्पन्नः परमप्रसन पुत्रं यदा मुनिना विलोकयामास तदा आश्चर्यो भूत्वा अयं मम पुत्रः अयोनिजः वर्तते सर्वे देवाः आकाशात् शुकोपरि पुष्पवृष्टिः कृता। तदनन्तरं व्यासः नामरणं तु शुकदेव इति कृतः, यज्ञोपवीतादि कृत्वा अध्ययनार्थं गुरोः पार्श्वे प्रेषितः। शुकः तत्र गत्वा सर्वान् वेदान् शास्त्रानधीत्य गुरोः दक्षिणां दत्वा पितुरं व्यासस्य सम्मुखे इदमवोचत्----

**किं सुखं मानुषे लोके ब्रूहितात निरामयम् ।**
**दुःखविद्धं सुखं प्राज्ञा न वदंति सुखं किल[१] ।।०।।**
**स्त्रियं कृत्वा महाभाग भवामि तद्वशानुगः ।**
**सुखं किं परतन्त्रस्य स्त्रीजितस्य विशेषतः ।।०।।**
**अयोनिजोऽहं विप्रर्षे योनौ मे कीदृशी मतिः ।**
**न वाञ्छाम्यहमग्रेऽपि योनावेव समुद्भवम् ।।०।।**
**येऽबुधा मन्दमतयो विधिना मुषिताश्च ये ।**
**ते प्राप्य मानुषं जन्म पुनर्बंधं विंशत्युत ।।०।।**

शुकदेव यदा इत्थं कथितं तदा महामुनि व्यास उवाच। भो पुत्र। ''न गृहं बन्धनागारं बंधने न च कारणम्'' यस्य मनः गृहस्थाश्रमे आसक्तोनाभूत् सः गृहस्थभूतेसति मुक्तो भवत्येव। पुत्र! त्वं मम हितकरी वार्ता मानयितव्यम् तथा सुन्दरकुलस्य

---

१- श्रीमद्देवीभागवत १स्क०अ०१४ श्लोक ३६, ३७, ४०, ५४ ।

कन्यया सह विवाहं कृत्वा वैदिकमार्गस्याश्रयणं ग्रहणं कर्तव्यमिति। पुत्र! त्वं भाग्ययशाली वर्तते मया देवीभागवतस्य रचना कृता अतः तं पठ, पञ्चलक्षणसंयुतं द्वादश स्कन्धाः तत्र वर्तन्ते, तं देवीभागवतं पुराणानां मध्ये अस्या एव प्राधान्यता वर्तते, यस्य पठनेन श्रवणेन च सदसज्ज्ञानविज्ञानं जायते अतः त्वं देवीभागवतस्याध्ययनं कुरु। एकस्मिन्समये भगवान्विष्णुः बालकरूपेण वटपत्रोपरि सुप्त सन् ''शोचमानः यदहं कथं बालकं निर्मितं कः चेतन पुरुषः मया इयं स्थितिः कृता, कस्य कार्यस्य सम्पादनार्थं निर्मितोऽहं केन द्रव्येणाहं रचितोऽस्मि।'' अयं महान् पुरुषः भगवान् विष्णुः चिन्त्यमाना तदैव भगवतीयोगमाया सम्पूर्णाशङ्का शान्त्यर्थं अर्धश्लोके एव सम्पूर्णपुरुषार्थानां सिद्धर्थानामिदंवचनमब्रवीत्। इदं सम्पूर्णं जगत् अहमेवास्मि ममान्यः कोऽपि वस्तु नास्ति।

''सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्'' सर्वप्रथमं तु विष्णोः मनसि इदं वचनं संविज्ञातं तदा चेतसा चिन्तयामास यत् सत्यावागियं केनोक्ता। चिन्ताप्रपन्नेन युक्तः भागवतं हृदि धृतम्। सः शयानः वटपत्रे सन् उपर्युक्त श्लोकार्धः पुनः पुनः उच्चारितः। तदा चिन्तासमन्वितः विष्णुः वटपत्रे शयितः।

"तदा शान्ता भगवती प्रादुरासचतुर्भुजा ।
शङ्खचक्रगदापद्म वरायुधधरा शिवा ।।०।।"

मन्दहास्यं प्रयुञ्जमाना शुभानना महालक्ष्मी अमित तेजसः विष्णोरग्रे प्रादुर्बभूव। तसिन् महार्णवे संस्थितां तां भगवतीं दृष्ट्वा विस्मितः यत् इदं निराधारां सलिले कथं प्रादुर्भूतेयं भगवती।

रतिर्भूतिस्तथा बुद्धिर्मतिः कीर्तिः स्मृतिर्धृतिः ।
श्रद्धा मेधा स्वधा स्वाहा क्षुद्रा निद्रा दया गतिः[१] ।।०।।
तुष्टि पुष्टि क्षमा लज्जा जृम्भातन्द्रा च शक्तयः ।
संस्थिताः सर्वतः पार्श्वे महादेव्याः पृथक् पृथक् ।।०।।

अनेन प्रकारेण आश्चर्यचकितो भूत्वा विष्णुः विचारितः यत् इमाः सर्वाः स्त्रियः काः तथा वटपत्रस्य केनाहं स्थापितः। अस्मिन्जलार्णवे घोरे न्यग्रोधः कथमुत्थितः, का अज्ञात शक्तिः ममशुभाकृतिं शिशुं कृत्वा अत्र स्थापितः। इयं का अज्ञातशक्ति ममाग्रे उपस्थितः अस्मिन् समये मया किं कर्तव्यमितिशोचमानो विष्णुः मौनमास्थाय अत्र तिष्ठोऽस्मि।

---

१- श्रीमद्देवीभागवत १स्क०अ०१५ श्लोक ६०, ६१ ।

अग्रे देवीभागवतस्य प्रथमस्कन्धस्य षोडश एवं सप्तदशोऽध्याये लिम्नलिखिताः विषया वर्तन्ते यान् संक्षेपेण प्रस्तौमि---

भगवान् विष्णुः, महालक्ष्मेः, तथा भगवान् विष्णोः तथा ब्रह्मणः संवादः, महामुनिव्यासद्वारा शुकदेवं जनकस्य पार्श्वे मिथिलापुरीं गत्वा संदेहनिवारणार्थमनुरोधं कृतः। तदनन्तरं शुकदेवः तत्र गमनार्थं प्रस्तुतः। शुकदेवः मिथिलापुर्यां गत्वा जनकस्य द्वारपालमुपदेशोः दत्तः, द्वारपाल अवरोधितः यत् अन्तः पुरे गमन न भविष्यति तदनन्तरः शुकः विलासभवने गत्वा निर्विकारस्थितौ भूत्वा स्थितः।

यदि उपर्युक्तं सर्वं वृत्तान्तं सम्यग्रूपेण विचारितं भविष्यति तदा तु प्रबन्धस्य कलेवरं विस्तृतं भविष्यति अत उपर्युक्तं यत् संक्षिप्तं विवरणं लिख्यते मया तदेवोचितं प्रतिभाति। प्रथमस्कन्धस्य अष्टादशोऽध्याये इदमस्ति यत् यदा शुकदेवः राजाजनकस्य विलासभवने स्थितः इति समाचारं महारजजनकेन यदा श्रुतं तदा मन्त्रिसहितान् गुरुपुत्रमग्रेकृत्वा शुकदेवस्य पार्श्वौ। जगाम। तदा राजा जनकस्य शुकदेवस्य च प्रश्नोत्तरं जातम्। महाराजजनकस्योपदेशात् शुकदेवस्य शंका निवारितः।

तदाशुकदेवः पुनः महामुनि व्यासस्य पार्श्वे परावर्तितः। तदनन्तरं शुकदेवस्य पाणिग्रहणभूत्। ततः शुकदेवं चत्वारः पुत्रा एवं एका कन्याया उत्पत्तिः कता तत्पश्चात् शुकदेवेन गृहत्यागं कृतः, इत्थं जाते सति महामुनि व्यासः विषादं गतः। व्यासं विषादं दृष्ट्वा भगवान्भूतनाथो महादेव उपस्थितो भूत्वा उवाच।

**व्यास शोकं मा कुरु त्वं पुत्रस्ते योगवित्तमः ।**
**परमां गतिमापन्नो दुर्लभा चाकृतात्मभिः ।।**
**तस्य शोको न कर्तव्यस्त्वयाशोकं विजानता ।**
**कीर्तिस्ते विपुला जाता तेन पुत्रेण चानघ[१] ।।०।।**

इदं शिवस्य वचनं श्रुत्वा व्यासेन अवोचत् यत् भो देवेश! न शोको याति, जगत्पते किं करोमि ''अतृप्ते लोचने मेऽघ पुनर्दर्शनलालसे'' तदनन्तरं शम्भुः उवाच यत् भो व्यास! श्रूयताम् ----

**छायां द्रक्ष्यासि पुत्रस्य पार्श्वस्थां सुमनोहराम् ।**
**तां वीक्ष्य मुनिशार्दूल शोक जहि परंतप[२] ।।०।।**

---

१- श्रीमद्देवीभागवत १स्क० अ०१९ श्लो० ५४, ५५ ।
२- श्रीमद्देवीभागवत १स्क० अ०१९ श्लो० ५७ ।

तदनन्तरं शुकदेवस्य परमप्रकाशमानं प्रतिबिम्बं दर्शयामास। मुनिं वरं दत्वा महादेव अनतर्हितः। व्यासः स्वाश्रमे जगाम।

श्रीमद्देवीभागवतस्य प्रथमस्कन्धस्य विंशत्यध्याये निम्नलिखिताः विषयाः संक्षेपतः लिखामि----

१- महामुनि व्यासस्य सरस्वत्या तटोपरि निवासः,

२- शंतनु कथा प्रसंगे भीष्मद्वारा काशिराज बालानामपहराणम्,

३- चित्रांगदस्य मरणम् , विचित्रवीर्यस्य कथायाः प्रसंगः,

४- महामुनि व्यासद्वारा पुत्रोत्पादनस्य प्रंसगः,

**श्रीमद्देवीभागवतस्य द्वितीयस्कन्धस्य विशिष्टविषयाणां परिचिन्तनम्**

**सत्यवत्या उत्पत्तिः, व्यासस्य प्राकट्यम्**

अत्र ऋषयः ऊचुः भगवन् सूतः! आश्चर्यकरमेतत् यत् पतिव्रता सत्यवत्याः पुत्रः कथं व्यासः समुत्पन्नः इत्यादिकं सर्वं विस्तरेण कथ्यताम् , परन्त्वहं प्रबन्धविसतरभयात् संक्षेपेणैव लेखयिष्यामि। प्रथमं तु आदि शक्तिविषये किञ्चित् ब्रवीमि।

या आदिशक्तिः, तथा यस्याः कृपया चतुर्वर्गस्य प्राप्तिः सरलतया प्राप्नोति तां परमां शक्तिं प्रणम्य शक्तेः स्वरूपं लिखामि----

शक्तयङ्कस्य २९५पृष्ठतः २९६पृष्ठस्य स्फुटः इतिपर्यन्तं लिखितम्----

**जगत्स्वरूपाप्यपनीतरूपा**
**संसारताराय च पोतरूपा ।**
**शिवादभिन्नापि शिवाप्ति हेतुः**
**शक्तिः शिवं नः सततं तनोतु ।।०।।**

शक्तिरेव समस्तजगदस्य सृष्टिः स्थितिः तथा प्रलयकर्तृ च। ब्रह्मः यः सृष्टि करोति, विष्णुः रक्षां करोति, रुद्रः संहारः करोति इदं सर्वं शक्तेः स्फुरणमस्ति। इदं सर्वं देवी नागवतस्य श्लोकात् स्पष्टो वर्तते, यथा----

**नूनं सर्वेषु देवेषु नाना नामधरा ह्यहम् ।**
**भवामि शक्तिरूपेण करोमि च पराक्रमम् ।।०।।**
**गौरी ब्राह्मी तथा रौद्री वाराही वैष्णवी शिवा ।**
**वारुणीचाथ कौवेरी नारसिंही च वैष्णवी ।।०।।**

यथा चेतनपदार्थेषु शक्तेः विलासः प्रत्यक्षं दृष्टिगोचरी भवति तथैव जडपदार्थेष्वपि तस्याः प्रभावः दरीदृश्यते। यथा नदीनां प्रवाहः, अग्नेः उष्णता, जलस्य शीतलता, सूर्यचन्द्रमसौ प्रकाशकत्वं, तथा घटपटादिपदार्थानां प्रकाश्यत्वस्य कारणं प्रकृतिरेवास्ति। इदमुपर्युक्तवचनं भगवतो व्यासस्य वचनेन सिद्धो वर्तते----

**जले शीतं तथा वाह्नावौष्ण्यं ज्योतिर्दिवाकरे ।**
**निशानये हिमाकारं प्रभवामि यथा तथा ।।०।।**

ईश्वरे समस्तकार्यकरणस्य यः सामर्थ्यं वर्तते, सा शक्ति अस्ति। परब्रह्मपरमात्मा शक्ति विशिष्टं भूत्वा जगदस्य रक्षणम् , नियमनादि सर्वाणि कार्याणि कर्तुं समर्थो वर्तते। शक्तयारहितः यदि चेत् तदा परमात्मा किञ्चिदपि कार्यं कर्तुं नहि समर्थो भविष्यति।

**तच्छक्तिभूतः सर्वेषु भिन्नो ब्रह्मादि मूर्तिभिः ।**
**कर्ता भोक्ता च संहर्ता सकलः स जगन्मयः ।।०।।**

अस्मिन् श्लोके सकलशब्दस्यार्थः = ''कलया सहवर्त्तमानः सकलः'' अर्थात् शक्तिविशिष्ट ब्रह्मएव देवः,

तिर्यक्, मनुष्यः, स्थाबरादिः, सर्वप्रपञ्चस्य सृष्टिकार्ये, रक्षणकार्ये तथा संहरणकार्ये समर्थाः भवन्ति। तस्या शक्तेः विषये भिन्न भिन्न शास्त्रेषु भिन्न भिन्न नाम्ना उल्लेखः वर्तते यथा--- सांख्ये योगे च सत्त्वगुणम् , रजोगुणम् , तमोगुणस्य साम्यावस्था प्रकृति नाम्ना उच्यते। तामेव शक्तिं प्रधानमप्युच्यते। वेदान्ते सा एव शक्तिः अविद्या अथवा माया नाम्ना उच्यते। तान्त्रिकाः तन्त्रो तामेव शक्तिनाम्ना स्वीकुर्वनित। श्रीमद्देवीभागवते उभयप्रकारस्य शक्तिः मन्यते, एका सगुणा द्वितीया निर्गुणाशक्तिः।

**सगुणा निर्गुणाचेति द्विधा प्रोक्ता मनीषिभिः ।**
**सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ।।०।।**

ईश्वरस्य यः सर्वातिशायीस्वातन्त्र्य अस्ति सा निर्गुणाशक्तिः। अस्याः शक्तिं विना ईश्वरस्य कदापि उपलब्धिः न भवितुं शक्नोति। ईश्वरस्य सा स्वातन्त्र्याख्यशक्तिः स्थाबरजङ्गमात्मक जगदस्यात्मा अस्ति। तथा ईश्वरस्य साक्षात्कारणमप्यस्ति। इदमेव तान्त्रिकाणां परमो सिद्धान्तः वर्तते।

तान्त्रिकप्रवराः वसुगुप्तः ''चैतन्यमात्मा'' इदं सूत्रं रचितम्। अस्यार्थ इदमस्ति यत् चेतनस्य भावः चैतन्यमात्मा (स्वातन्त्र्याख्य

शक्तिः) अस्ति। इयं कस्यात्मा समस्तस्थाबरजङ्गमात्मकजगदस्य।

प्रथमस्तु यदमया लिखितं दत् ''शक्तिं विना ईश्वरं प्राप्तं कर्तुं अन्यः कोप्युपायो नास्ति'' अयमपि तान्त्रिकप्रवरा अभिनवगुप्तस्य उक्तया स्पष्टो भवति यथा----

**तस्माद्येन मुखेनैष भात्यनंशोऽपि तत्तथा ।**
**शक्तिरित्येष वस्त्वेव शक्तितद्वत् क्रमः स्फुटः ।।०।।**

अस्य श्लोकस्य व्याख्याकारः आचार्यप्रवरः जयरथा लिखन्ति यत्----

अनंशोऽपि सदाशिवः येन मुखेन भुवनाधन्यतमांश लक्षणेन मुखेन भावनादी भासतेतन्मुखं तु शिवप्राप्त्युपायतया शक्तिरेव, नहि एतदवगमादौ उपायान्तरमस्ति, उपपद्यते वा। अतश्च शक्ति शक्तिमतो उपायोपेयभावात्मा क्रमः सम्यगेव स्फुटः। इतः पर्यन्तं परमाशक्ति विषये किञ्चित् स्व विचारं प्रकटीकृतः तदनन्तरं सत्यवत्या उत्पत्तिः केनरूपेण जाता तमधिकृत्य संक्षेपेण वर्णयामि----

## सत्यवत्या उत्पत्तिः

एकः धार्मिकः एवं सत्यप्रतिज्ञः उपरिचर नामको राजा आसीत्। सम्पूर्णे जगति तस्य ख्याति आसीत्। तस्य स्त्री अतिसुन्दरी आसीत्। एकदा सा स्त्री ऋतुमती आसीत् , सा पुंसवनव्रतं कृत्वा पतिदेवात् स्वकामना प्रकटी कृता। परन्तु पितृभ्य आज्ञयाराजामृगयार्थं बनंजगाम। परन्तु राजर्षि चित्तः भामिनीम् संस्मार तस्मिन्नेव समये राज्ञः तां कामिनीं स्मरतः शुक्र स्खलितो जातः। राज्ञो वीर्य अमोघ अतः कामिनीं पार्श्वे प्रेषयितव्यः। तं वीर्यं वटपत्रस्य पुटके स्थापयित्वा श्येन पक्षिद्वारा कामिनीं पार्श्वे प्रेषितः। आकाशमार्गे स श्येन उड्डीयमानः सन् तं पुटकं नीत्वा तसिमन्मध्ये एक द्वितीयः श्येन आगतः तं पुटकाय तुण्डयुद्धं आकाशे सम्प्रचक्रतुः। ततः सः पुटकः यमुनायाः जले पपात। तसिमनसमये एका अद्रिका नामा अप्सरा यमुनायां स्नानं कृता आसीत् तथा एकः विप्रः स्नानं कृत्वा सन्ध्यावन्दन संलग्नो आसीत्। सा अप्सरा विप्रस्यचरणं जग्राह। विप्रः तां कामचारिणीं दृष्ट्वा यतः त्वं ध्यानविघ्नकरी अतः मत्स्यी भव इति शशाप। सा अप्सरा मत्सीरूपेण तस्मिन् यमुनाजले आसीत्। सा मत्स्यीरूपी अप्सरा तं शुक्रं झटिति चरवाद। ततः धीवरः तां मत्स्यीं स्व जाले बाधितः। सामत्स्यी दशमे मासे एकः बालकः द्वितीया कन्या समुत्पन्ना

कृता। बालः कुमारः सुभगः, कन्या सा शुभानना। धीवरः तां कन्यां परिपालितः परन्तु तस्याः कन्यायाः शरीरेणमत्स्य गंधमस्ति तस्या नाम मत्स्यगन्धा भविता। ततः मत्स्यीरूपी अप्सरा बालकौ जनयित्वा सा मृता एवं शापतः मुक्ता स्वर्गं गता। सा वाला मत्स्यगन्धा नामयुक्ता अग्रे सत्यवती नाम्ना प्रसिद्धा पाराशर मुनिना सह सम्बन्धो जातः।

## व्यासस्य प्राकट्यम्

एकस्मिन् समये महातेजस्वी मुनिः पराशरः तीर्थयात्रा समये यमुनातटोपरि आजगाम। तस्मिन्समये नाविकः भोजनं कुर्वन्तं सन् तदैव मुनिः प्रोवाच भो नाविक! मम कालिन्धां परंपारं उडुपेन प्रापयस्य। मुनेराज्ञा श्रुत्वा स नाविकः स्वपालितसुतां मत्स्यगन्धां उवाच शुचिस्मिते! मुनिं उडुपेन परंपारं नयस्व, तदा मत्स्यगन्धा मुनिं उडुपेन आसीनं कृत्वा संवाहयति। ततः दैवयोगतः तां चारुलोचनां कन्यां दृष्ट्वा मुनिः मनसि प्रबलवासना जागरिता, तथा मुनः स्वदक्षिणेन करेण कन्यायाः दक्षिणकरमपस्पृशत्। तदा सा कन्या तमुवाच=

कुलस्य सदृशं वः किं श्रुतस्य तपसश्च किम् ।
त्वं वै वसिष्ठदायादः कुलशीलसमन्वितः ।।०।।

किं चिकीर्षसि धर्मज्ञ मन्मथेन प्रपीडितः ।
दुर्लभं मानुषं जन्म भुवि ब्राह्मणसत्तम ।।
तत्रापि दुर्लभं मन्ये ब्राह्मणत्वं विशेषतः[१] ।।०।।

इत्यादि सर्वं सा कन्या मुनये निवेदितम् परञ्च सा विचारितञ्च मनसि यदयं मूर्ख ब्राह्मण अस्ति सा कथिता यत् भो मुने! "धैर्यं कुरु महाभाग परंपारं नयामि वै"। तदा पुनः सा कन्या उवाच मुनिवर!

दुर्गन्धाऽहं मुनिश्रेष्ठ कथं त्वं नोपशङ्कसे ।
समानरूपयोः कामसंयोगस्तु सुखावहः ।।०।।

सा कन्या इत्युक्तः तदा मुनिः तां मनोहरां कान्तां दक्षिणे पाणौ जग्राह मृगनाभिसुगन्धां तां कृत्वा प्राह भो वाले! अद्यतः तव नाम सत्यवती इति। पुनः सा कन्या उवाच मम पिता तटे स्थितः पश्यति तथा जनसमाज अपि पश्यति अतः पशुधर्मे न मे प्रीतिः अतः प्रतीक्षस्व यावत् भवति यामिनी, ततः मुनिः स्वपुण्यबलेन शीघ्रं नीहारं कल्पयामास, नीहारे समुत्पन्ने अतितमसायुते तटे कामिनीं तं मुनिं प्राह। विप्रवर! अहं कुमारी त्वं माम भुक्तवा गंतासि त्वं

१- श्रीमद्देवीभागवत स्क०२ अ०२ श्लोक ८, ९, १०

अमोघवीर्यः, ब्रह्मन् माम् का गतिः भवेदिति चेदहं सगर्भा भवामि। अद्य पितरं किं ब्रवीमि इति सर्वं विचार्य वदस्व माम्। पराशर उवाच भामिनी त्वमिच्छसि यत् तद् वरं वृणीष्व। ततः सा सत्यवती उवाच।

यथा मे पितरौ लोके न जानीतौ हि मानद ।
कन्याव्रतं न मे हन्यात्तथा कुरु द्विजोत्तम
पुत्रश्च त्वत्समः कामं भवेदद्भुत वीर्यवान् ।।
गंधोऽयं सर्वदा मे स्यायौवनंध नवं नवम्[१] ।।०।।

पराशरोवाचं सुन्दरि! तव पुत्रः विष्णोरंशः भविष्यति। त्रैलोक्ये तस्य प्रसिद्धिः भविष्यति। प्रसन्नवदने! तव पुत्रः पुराणानां रचयिता भविष्यति वेदान् रहस्यं ज्ञात्वा स तान् वेदान् चतुर्भागेषु विभक्तं करिष्यति। त्रैलोक्येषु तस्य प्रतिष्ठा सुस्थिरा भविष्यति। इदं पराशरस्य वचनं श्रुत्वा सा सत्यवती अनुकूला जाता तदनन्तरं सा सगर्भा जाता। समयानुसारं सत्यवती यमुनायाः द्वीपे एव सुतंमुत्पन्नं कृता। सः बालः द्वैपायनोऽभवत्। सः द्वैपायनः विष्णोरंशः भगवान् व्यास नाम्ना प्रसिद्धो जातः। ततः सा कन्या पितुः गृहे गता।

---

१- श्रीमद्देवीभागवत स्क०२ अ०२ श्लोक सं० २८, २९, ३० ।

द्वितीय स्कन्धस्य तृतीय चतुर्थोऽध्याये निम्नलिखिताः विषयाः वर्तन्ते तेषां संक्षेपेण वर्णनं विधास्यते----

१- इक्ष्वाकुवंशोत्पन्नः राजामहाभिषस्य वर्णनम्।

२- गङ्गां ब्रह्मणः शापम्।

३- राजा महाभिषस्य शंतनुरूपे उत्पत्तिः।

४- राजा शंतनु राज्यपदोपरि प्रतिष्ठितः।

५- राजा शंतनुनासह गङ्गायाः पाणिग्रहणम्।

६- वसूनामुत्पत्तिः।

७- भीष्मस्योत्पत्तिः तथा गङ्गा अन्तर्ध्यानम्।

द्वितीयस्कन्धस्यपञ्चम षष्ठोऽध्याये अयं विषयः वर्तते----

१- भीष्मस्य प्रतिज्ञायाः विवेचनं तथा सत्यवत्या सह महाराजशंतनो विवाहः तथा कौरवपाण्डवानां जन्मस्य विवरणम्।

सप्तम अष्टमाध्याये निम्नलिखिता विषयाः विनिवर्तन्ते।

कौरवपाण्डवानां संक्षिप्तेतिहासः।

२- युद्धे प्रायः सर्वेषां संहारः।

३- भगवान् व्यास द्वारा श्रीभुवनेश्वरीदेव्याः कृपया गान्धारी, कुन्ती, उत्तरा प्रमुखादिकं मृतसम्बन्धीनां दर्शनम्।

४- भगवान् कृष्णस्य एवं बलरामस्य चान्तर्ध्यानम्।

५- पाण्डवानां हिमालय प्रवेशः।

६- परीक्षितं राज्यप्राप्तिम्।

७- ब्राह्मणकुमारस्य शापम्।

नवमदशमाध्याययोः इदमस्ति----

रुरोः द्वारा अर्धमायुप्रयच्छेन प्रमद्वरानाम्नी कन्यायाः पुनर्जीवनम् , तक्षकस्य परीक्षितं दंशनम् तथा परीक्षितस्य मृत्युः इत्यादिकं सर्वं विवेचितमस्ति।

अग्रे एकादशद्वादशोऽध्याये इदमस्ति----

१- जनमेजयस्य राज्याभिषेकः।

२- उत्तङ्कस्यानुरोधेन सर्पयज्ञस्यायोजनम्।

३- आस्तीकवचनकारणात् जनमेजयद्वारा सर्पयज्ञस्य समाप्तिः।

४- आस्तीक जन्मस्येतिहासः।

**तृतीयस्कन्धस्य विशिष्ट विषयाणां परिचिन्तनम्।**

व्यासस्य सम्मुखे जनमेजयस्यायं प्रश्न उपस्थितः। प्रथमस्तु प्रधानदेवतायाः वर्णनं कुरु।

द्वितीयस्तु ब्रह्माण्डस्योत्पत्तिः कथं जाता तस्य स्वरूपं किम्। ब्रह्मणद्वारा नारदं प्रति भगवती आद्याशक्तेः वर्णनम्। श्रीभगवती द्वारा देय विमानोपरि ब्रह्मा विष्णु महेशा आरुह्य विविधलोकेषु गमन समये तेषां लोकानां विलक्षणं दृश्यं दृष्ट्वा अन्ते भगवत्याः दिव्य द्वीपे तेषां गमनम्।

उपर्युक्तं सर्वे विषयाः विशिष्टाः परन्तु सर्वेषां विषयाणां यदि समीक्षा विधास्यते तर्हिं विस्तृतं प्रबन्धस्य कलेवरं भविष्यति अतः एको विशिष्ट विषयोपरि किञ्चित् संक्षिप्तं विवेचनं करिष्ये----

यदा ब्रह्मा विष्णु महेशः भगवतीद्वारा देय विमानोपरि आरुह्य भगवत्याः दिव्यद्वीपे गमनं कृतं तदा तत्रतः यद् दृश्यमासीत् तं दृश्यमवलोक्य देवाः आश्चर्य चकिताः जाताः। भगवती दिव्य द्वीपस्य वर्णनम्---

ब्रह्मोवाच=

मंदारपारिजाताद्यैः पादपैरतिशोभितः ।
नानास्तरणसंयुक्तो नाना चित्रविचित्रतः ।।०।।
मुक्तादाम परिक्लिष्टो नानादाम विराजितः ।
अशोक बहुकलाख्यैश्च वृक्षैः कुरबकादिभिः ।।०।।
द्विरेफातिरणत्कारै रंजितः परमाद्भुतः ।
तस्मिन्द्वीपे शिवाकारः पर्यङ्क सुमनोहरः ।।०।।
रत्नालिखचितोऽत्यर्थं नानारत्न विराजितः ।
दृष्टोऽस्माभिर्विमानस्थैर्दूरतः परिमंडितः ।।०।।
नानासतरणसंछन्न इन्द्रचाप समन्वितः ।
पर्यङ्क प्रवरे तस्मिन्नुपविष्टा वरांगना ।।०।।

यस्मिन्प्रवरे पर्यङ्के या वराङ्गना आसीत् तस्याः कण्ठे रक्तमाला आसीत्। रक्तगन्धानुलेपिता, सुरक्तनयना सा कान्ता प्रभापूर्ण देवी आसीत् तस्याः प्रभा विद्युत्कोटिसमा आसीत्। रक्तदन्तच्छदविराजिता सुचारुवदना, रमाकोट्याधिका सा कान्ता, सूर्यस्य प्रतिभायाः समानं अखिला शोभासम्पन्ना, दिव्यपाशाङ्कुशवराभयमुद्रया सा भगवती भुवनेश्वरी देव्याः

करौ सुशोभितौ आस्ताम्। अद्भुतानि आभूषणानि धारितानि। ब्रह्मोवाच यत् एतादृशा कापि स्त्री मया न दृष्टा। तस्याः देव्याः पार्श्वे अनेकेसाधकाः स्थित्वा न्हीं अस्य मन्त्रस्य जपं कुर्वाणाः। साधकानां हृदि अखिलजगतस्याधिष्ठा त्री देवी निवासं करोति। नामजपे अनेकाः नवयौवनाकुमारी निरन्तरं स्तुतिं कर्तुमुद्यता आसन्। तत्र एकः यन्त्र५ निर्मितः तस्मिन्यन्त्रे षट्कोणाः आसन्। तस्मिन् यन्त्रोपरि भगवती भुवनेश्वरी विराजमाना आसीत्। तां भगवतीं दृष्ट्वा सर्वे (ब्रह्मा विष्णु महेशाः) आश्चर्य चकिताः जाताः। इयं सुन्दरी का। अस्या नाम का। वयं अनभिज्ञा अस्याः विषये अस्याः सहस्राणि नेत्राणि, सहस्रकराः, सहस्राननाः, इयं अतिसुन्दरी दूरादेवदर्शनि नेयं अप्सरा न गन्धर्वकन्या न देवकन्या एव।

एते वें ब्रह्माविष्णुमहेशाः तत्र स्थिताः ततः भगवान् विष्णुः तां चारुहासिनीं भगवतीमवलोक्य विवेकपूर्व निश्चयं कृतः यत् इयं भगवती जगदम्बिका अस्ति। ततः विष्णुरुवाच।

**एषा भगवती देवी सर्वेषां कारणं हि नः ।**
**महाविद्या महामाया पूर्णा प्रकृतिरव्यया ।।०।।**
**दुर्ज्ञेयाऽल्पधिया देवीयोगगम्या दुराशया ।**
**इच्छापरात्मनः कामं नित्यानित्यस्वरूपिणी ।।०।।**

दुराराध्याऽल्पभाग्यैश्च देवी विश्वेश्वरी शिवा ।
वेदगर्भा विशालाक्षी सर्वेषामादिरीश्वरी ।।०।।
एषा संहृत्य सकलं विश्वं क्रीऽति संक्षये ।
लिंगानि सर्वजीवानां स्वशरीरे निवेश्य च ।।०।।

विष्णु अत्र कथयति यत् भो ब्रह्मा, महेश! दृश्यताम् सर्वापरिचर्या पराः सेवा कुर्वन्ति। रागयुक्ता ये जना ते दर्शनं न प्राप्नुवन्ति। एषा मूलप्रकृतिः, सदा परमपुरुषैः सह स्थिताः भवन्ति। अखिलं ब्रह्माण्डं रचयिता। परमपुरुषं द्रष्टा अस्ति इदं चराचरजगत् दृश्य अस्ति। सर्वेषां इयं अधिष्ठात्री देवी सन्ति। इमाः सम्पूर्ण संसारस्य कारणमस्ति। इमा एव दिव्याङ्गना। यस्याः प्रलयार्णवे मह्यं दर्शनं कृतम्। तस्मिन् समयेऽहं बालरूप आसीत्। इमाः सर्वेषां जननी। विष्णुः पुनरुवाच भो ब्रह्मा, शिव अग्रेऽपि श्रूयताम्। अस्माकं विचारः यत् भगवत्याः पार्श्वे एव गन्यव्यम् अतः अहं, शिवः त्वं (ब्रह्मा) निर्भीको भूत्वा तत्रोपस्थितो भूत्वा भगवत्याः स्तुतिः कर्तव्यम्। देव्याः पार्श्वे एते त्रयो देवाः जग्मुः तत्र गत्वा अनेन प्रकारेण स्तुतिं कर्तुमारब्धः।

## स्तुतिः

नमो देव्यै प्रकृत्यै च विधात्र्यै सतं त नमः ।
कल्याणै कामदायै च वृद्धिसिद्धयै नमो नमः ।।०।।
सच्चिदानन्दरूपिण्यै संसारारणये नमः ।
पंचकृत्यविधात्र्यै ते भुवनेश्यै नमोनमः ।।०।।
सर्वाधिष्ठानरूपायै कूटस्थायै नमो नमः ।
अधर्ममात्रार्थभूतायै हृल्लेखायै नमोनमः ।।०।।

ज्ञातं मयाऽखिलमिदं त्वयि सन्निविष्टं
त्वत्तोऽस्य संभवलयावपि मातरद्य ।
शक्तिश्चतेऽस्य करणे तितप्रभावा
ज्ञाताऽधुना सकललोकमयीति नूनम् ।।०।।
विस्तार्य सर्वमखिलं सदसद्विकारं
संदर्शयस्याविकलं पुरुषाय काले ।
तत्त्वैश्च षोडशभिरेव च सप्तमिश्च
भासींद्रजालमिव नः किल रंजनाय ।।०।।
न त्वामृते किमपि वस्तुगतं विभाति
व्याप्यैव सर्वमखिलं त्वमवस्थितासि ।
शक्तिंविना व्यवहृतौ पुरुषोऽप्यशक्तो
वंभण्यते जननि बुद्धिमता जनेन ।।०।।
प्रीणसि विश्वमखिलं सततं प्रभावैः
स्वैस्तेजसा च सकलं प्रकटी करोषि ।
अत्स्येव देवि तरसा किल कल्पकाले
को वेद देवि चरितं तव वैभवस्य ।।०।।

---

श्रीमद्देवीभागवत स्क०३ अ०४ श्लोक २७, २८, २९, ३०, ३१, ३२, ३३ ।

अनेन प्रकारे बहुविधरूपेण भगवान् विष्णुः देव्या स्तुतिः कृतवान् , अन्ते इदमपि कथितं यत् भो देवि! त्वदिच्छया एवास्माकं शरीर शक्ति आगच्छति तदैवाहं सर्वेषां कार्याणामधिकारी भवामि। विष्णोः सतुति जाते सति शिवः ब्रह्मा अपि विधिवत् भगवत्याः भुवनेश्वर्या स्तुति मकरोत्। एते त्रयो देवा इदमप्युच्यन्ते यत् भो देवि! ''एकमेवाद्वितीयं ब्रह्म' अस्य वेदवाक्यस्यापि भावाः अर्थो वा भवति एव क्रियताम् येन वयं अस्य रहस्यं सम्यग् जानीमः।

तदा जगदम्बिका स्वस्वरूपस्य वर्णनं कर्तुमारभते।

**सदैकत्वं न भेदोऽस्ति सर्वदैव ममास्य च ।**
**योऽसौ साहमहं योसौ भेदोऽस्ति मतिविभ्रयात्[1] ।।०।।**
**आवयोरन्तरं सूक्ष्मं यो वेद मतिमान्हि सः ।**
**विमुक्तः स तु संसारान्मुच्यते नात्र संशयः ।।०।।**
**एकमेवाद्वितीयं वै ब्रह्म नित्यं सनातनम् ।**
**द्वैतभावं पुनर्याति काल उत्पित्सुसंज्ञके ।।०।।**
**यथादीपस्तथोपाधे र्योगात्संजायते द्विधा ।**
**छायेवादर्शमध्ये वा प्रतिबिम्बं तथा ऽऽवयोः ।।०।।**
**भेद उत्पत्तिकाले वै सर्गार्थं प्रभवत्यज ।**
**दृश्यादृश्यविभेदोऽयं द्वै विध्ये सति सर्वथा ।।०।।**
**नाहं स्त्री न पुमांश्चाहं न क्लीबं सर्ग संक्षये ।**
**सर्गेसति विभेदः स्यात्कल्पितोऽयं धिया पुनः ।।०।।**

---

१- श्रीमद्देवीभागवत स्क०३ अ०६ श्लोक २, ३, ४, ५, ६, ७।

अहं बुद्धीरहं रीश्च धृतिः कीर्तिः स्मृतिस्तथा ।
श्रद्धा मेधा दया लज्जा क्षुधा तृष्णा तथा क्षमा[1] ।।०।।
कांतिः शान्ति पिपासा च निद्रातन्द्रा जराऽजरा ।
विघाविद्या स्पृहा वाञ्छा शक्तिश्चाशक्तिरेव च[2] ।।०।।
वसा मज्जा च त्वक्चाहं दृष्टिर्वागनृतानृता ।
परामध्या च पश्यन्ती नाड्योऽहं विविधाश्च या ।।०।।
किं नाहं पश्य संसारे मद्वियुक्तं किमस्ति हि ।
सर्वमेवाहमित्येवं निश्चयं विद्धि पद्मज ।।०।।

अनेन प्रकारेण भगवत्याः स्तुतिविषये अनेका श्लोकाः वर्तन्ते परन्तु प्रबन्धविस्तरभयात् किञ्चिदेवोल्लिताः। अग्रे भगवती जगदम्बा स्वस्वरूपं त्रीणि रूपेण विभक्तम्। अतः विष्णु प्रति उवाच भो विष्णो! मनोहारिणी लक्ष्मीं त्वत्कृते वर्तते, इयं लक्ष्मी त्वयी वक्षस्थले निरन्तरं विराजमानाः भविष्यति। शिवकृते महाकालीरूपेणास्मि तेनसहममविवाहो भविष्यति तदनन्तरं ब्रह्मा कृते सरस्वती नाम्ना रूपेणस्मि, अतः त्रयो देवानां मध्ये अहमेवस्मिएतस्मिनृ विषये न किञ्चिदपि संदेहलेशः वर्तते।

---

१- श्रीमद्देवीभागवत स्क०३ अ०६ श्लोक ८ ।

२- श्रीमद्देवीभागवत स्क०३ अ०६ श्लोक ९, १०, ११ ।

## चतुर्थस्कन्धस्य विशिष्ट विषयाः

जनमेजयस्य व्यासस्य चावतार विषयक प्रश्नोत्तरमस्ति। कश्यपं कश्यपं वरुणस्य ब्रह्मणः शापम्। अदितिं दितेः शापम्। व्यासस्य सन्मुखे उपस्थितो जनमेजय एकः प्रश्नः कृतः यत् मायायाः का महिमा तस्याः वर्णनं सुष्टुतया प्रकाश्यतमिति।

चतुर्थस्कन्धस्य पञ्चमषष्ठोऽध्याये इदमस्ति एकस्मिन् समये नरः नारायणश्च हिमालयपर्वतोपरि गत्वा वदरिकाश्रम-नामकपवित्रस्थाने तपस्या प्रारम्भं चक्रम। मुनिवरेषु नरनारायणः तपस्विषु प्रधानं गण्यमानौ तदा इन्द्रः द्वेषवशात् कामदेवमेवं वसन्तर्तुः आदेशं दत्तः। उभौ तत्र गत्वा तं नरनारायणं वशीकुरु। ते सहायार्थं मया वारांगना अपि प्रेषयामि। वारांगना तत्र गत्वा नरनारायणं प्रत्युवाच भो अहं स्वर्गात् अत्रागता तव मोहपाशे बध्वा। अत अस्माकं त्यागं मा कुरु ततो नर नारायणौ कथितौ यत्-- ''पूर्वं वर्षसहस्त्रं तु तपस्तप्तं मयात्र वै'' आवाम् जितेन्द्रियौ अतः तपं नष्टं कथं कर्तुं शक्यते। ''नेच्छा कामे सुखे काचित्सुखधर्म विनाशके'' पाशविकधर्म तुलनाकर्तारः मिथुनधर्मे बुद्धिमानपुरुषः स्वमनं कथं रमते। अप्सरसः उचुः--- शब्दादीनां पञ्चगुणानां मध्ये स्पर्श आगच्छति अस्मात् कारणात् स्पर्शजनितसुखं सर्वोत्तमं मन्यते। अतः

महाराज अस्माकं वचनं सर्वथा अङ्गी कुरु। ततः निर्ममतापूर्वकं अस्माभिः सह सुखं भुक्तवा गंधमादनपर्वते भ्रमणं कुरु इति। तदनन्तरम्----

नारायणात् नरस्य वार्ता तथा च्यवनप्रह्लादस्य संवादः, प्रह्लादस्य नैमिषारण्यगमनम्। प्रह्लादेन सह नारायणस्य पुद्धमभूत्। अग्रे यद् विशेष विषयमस्ति तमुल्लिख्यतें। "देवदानव युद्धम् तथा भगवती देवासुरसंग्रामस्य निवारणं कृतः।

अस्मिन् चतुर्थस्कन्धस्य अष्टादश एकोनविंशत्यध्यांये भाराक्रान्त पृथ्वी भगवतः शरणे गमनम् तदा भगवती योगमाया तां पृथ्वीं आश्वासयतीति। अस्मिन्नेव स्कन्धे कृष्णावतारस्य संक्षिप्तं चरित्रवर्णनं विद्यते। श्रीकृश्णः शिवस्य प्रसन्नतायै तपं कृतम् ततः शिवो श्रीकृष्णं वरदानं प्रदत्तम्।

**पञ्चमस्कन्धस्य विशिष्ट विषयाणां संक्षिप्तं विवरणं प्रस्तौमि-**

पञ्चमस्कन्धे पञ्चत्रिंशदध्यायाः सन्ति परन्तु सर्वेष्वध्यायेषु विशिष्टविषयं मन्मते नास्ति अतः यस्मिन् अध्याये विशिष्टाः विषयाः विनिवर्तन्ते तान् एव मीत्वा विवरणं प्रस्तोष्ये।

प्रथमतः तृतीयाध्याय पर्यन्तं निम्नलिखिताः विषयाः----

१- रम्भ करम्भस्य कथा तथा महिषासुर एवं रक्तबीजस्योत्पत्तिः व्यासेन सुष्टुरूपेण प्रस्तुतः।

२- महिषासुरद्वारा इन्द्रस्यपार्श्वे दूतस्य प्रेषणम्।

३- दूतः तत्रतः परावर्तितः। महिषासुरस्य देवानामुपरि आक्रमणाय दैत्यान् प्रोत्साहनप्रदानम्।

षष्ठसप्तमाध्याये---- महिषासुरादयेन सह भगवान् विष्णुः तथा महादेवस्य भीषण युद्धम्। युद्धमध्ये एव विष्णुः शिवः ब्रह्मा एते त्रयो देवाः युद्धात् पराङ्मुखो भूत्वा परावार्तिताः। तदा इन्दादि देवानां पराजयो जातः। तदा इन्द्रः ब्रह्मा एवं शिवेन सह विष्णोः पार्श्वे गमन्म्। इन्द्रादि देवांनां सर्वं वचनं श्रुत्वा विष्णुः हसन्निव उवाच भो देवाः मया पूर्वं युद्धं कृतं परन्तु असौ न मृतः अतः यूयं स्व तेजः एकत्रीकुरु तदा वरारोहा चेदुत्पन्ना सा रणे तं बलात् हन्यात्। तदा देवानां तेजेन भगवत्याः प्राकट्यम्। तदा देवाः दिव्यानि आयुधानि तां देवीं प्राददत्। तदननतरम् महिषासुरः स्वदूतं देव्याः पार्श्वे प्रेषणम्। पुनः दूतेन सह देव्याः वार्ता जाता। दूतः पुनः

महिषासुरस्य पार्श्वे परावर्तितः। अनेन प्रकारेण अनेकवारं संदेशप्रदानम् जातत्। महिषासुरस्य पार्श्वे ये विशिष्टा योद्धार आसन् तेषां सर्वेषां हननं देव्याः कृतम्। अन्ते भगवती चणिुका महिषासुरस्यापि वधम् कृतम् तदा सर्वे देवा भगवती जगदम्बिकायाः स्तुतिमकुर्वन्। एकोनविंशत्यध्याये देवाः देव्याः यदस्तुतिं कृताः सा द्वात्रिंशत् श्लोकेन। तेषु श्लोकेषु केवलं त्रयः श्लोका अत्र उपस्थाप्यन्ते----

ब्रह्मासृजत्यवति विष्णुरिदं महेशः
शक्तया तवैव हरते ननु चांतकाले ।
ईशा न तेऽपि च भवनित तया विहीना
स्तस्मात्त्वमेव जगतः स्थितिनाशकर्त्री ।।१।।
कीर्ति र्मतिः स्मृतिगती करुणा दयात्वं
श्रद्धा धृतिश्च वसुधा कमला जया च ।
पुष्टिः कलाऽथ विजया गिरिजा जयात्वं
तुष्टिः प्रमा त्वमसि बुद्धिरुमा रमा च ।।२।।
विद्या क्षमा जगति कांतिरपीह मेधा
सर्वं त्वमेव विदिता भुवनत्रयेऽस्मिन् ।
आभिर्विना तव तु शक्तिभिराशु कर्तुं
को वा क्षमः सकललोक निवास भूमे ।।३।।

अस्मिन्पञ्चमसकन्धस्यैकविंशत्यध्याये विशिष्टाविषयमिदम्--

शुम्भनिशुम्भौ ब्रह्माद्वारा वरदानम् तथा देवैः सह युद्धम्।

देवानां पराजयम्। देवाः देव्याः स्तुतिमकुर्वन्। तदनन्तरं देव्याः प्राकट्यम्।

चतुर्विंशत्यध्याये धूम्रलोचनस्य तथा देव्या संवादः। धूम्रलोचनेनसह देव्याः युद्धम् जातम्। देवीद्वारा ध्रूमलोचनस्य वधः ततः देवाः देव्याः स्तुतिं कृताः। अग्रे चण्डमुण्डैः सह देव्याः युद्धमन्तिमे देवी चण्डमुण्डस्य वधमकरोत्। रक्तवीजेन सह देव्याः वार्ता जाता। अन्ते रक्तवीजस्य वधः देवीद्वारा।

पञ्चमस्कन्धस्य त्रिंशत् तथा एकत्रिंशोऽध्याये शुम्भ निशुम्भस्य निधनम्। अग्रे देव्याः महिमायाः वर्णनं वर्तते।

पञ्चमस्कन्धस्य चतुस्त्रिंशोऽध्याये देव्या पूजाविधिः। राजा सुरथः सुमेधाऋषणः देव्याः पूजनविधि होम विधिश्चमन्त्राश्च अपृच्छत्--- सुमेधाऋषिः प्रोवाच---

राजन्! शृणु अहं शुभं पूजाविधिं होमविधिञ्च प्रवक्ष्यामि। येन विधिना नृणां कामदं मोक्षदं ज्ञानदं दुःखनाशनच्च भवति।

आदौ स्नानविधिं कृत्वा शुचिः शुल्काम्बरो नरः ।
आचम्य प्रयतः कृत्वा शुभमायतनं निजम् ।।०।।
ततोऽवलिप्त भूम्यां तु संस्थाप्यासनमुक्तमम् ।
तत्रोपविश्य विधिवत्त्रिराचम्य मुदान्वितः ।।०।।
पूजाद्रव्यं तु संस्थाप्य यथाशक्त्यनुसारतः ।
प्राणायामं ततः कृत्वा भूतशुद्धिं विधाय च ।।०।।
कुर्यात्प्राणप्रतिष्ठां तु संभारं प्रोक्ष्य मंत्रतः ।
कालज्ञानं ततः कृत्वा न्यासं कुर्माद्यथाविधि ।।०।।
शुभे ताम्रमये पात्रे चन्दनेन सितेन च ।
षट्कोणं विलिखेद्यन्त्रं चाष्टकोणं ततो बहिः ।।०।।
नवाक्षरस्य मंत्रस्य बीजानि लिलिखेत्ततः ।
कृत्वा यन्त्र प्रतिष्ठां च वेदोक्तां संविधाय च ।।०।।
अर्चां वा धातवीं कुर्यात्पूजामन्त्रैः शिवोदितैः ।
पूजनं पृथिवीपाल भगवत्या प्रयत्नतः ।।०।।
कृत्वा वा विधितत्पूजामागमोक्तां समाहितः ।
जपेन्नवाक्षरं मन्त्रं सततं ध्यानपूर्वकम् ।।०।।

अनेन प्रकारेण देव्याः पूजाविधानं सुमेधा ऋषिः कथिता।

---

श्रीमद्देवीभागवत स्कन्ध५ अ०३४ श्लोक २-१० पर्यन्तम् ।

## षष्ठः स्कन्धः

श्रीमद्देवीभागवतस्य षष्ठस्कन्धे एकत्रिंशोऽध्यायाः वर्तन्ते। तेष्वध्यायेषु ये विषयाः सन्ति तेषु मध्ये विशिष्टाणां विषयाणा मन्त्र सम्मुलेखः करिष्याम्यग्रे----

**विशिष्टाः विषयाः-**

१- वृत्तासुरस्य प्रंसगे ऋषीणां प्रश्नस्य चर्चा विधीयते।

२- महामुनि सूतः तेषां प्रश्नानामुत्तरं ऋषीन् प्रदत्ताः।

३- इन्द्रद्वारा विश्वरूपस्य वधः।

४- त्वष्टायज्ञेन वृत्रस्य प्रादुर्भावः।

५- वृत्रासुर द्वारा इन्द्रस्य पराजयः।

६- वृत्रासुरस्य तपस्या, ततः तपस्याद्वारा वरप्राप्तिः।

७- वृत्रासुरद्वारा देवानामुपरि विजयप्राप्तिः।

८- अन्ते वृत्रासुरस्य वधः, ब्रह्महत्याभयात् इन्द्रः मानसरोवर क्षिप्तः।

# सप्तम स्कन्धः

श्रीमद्देवीभागवतस्य सप्तमस्कन्धे चत्वारिंशदध्यायाः वर्तन्ते तत्रतः ये विशिष्टाः विषयाः वर्तन्ते तेषां विषयाणां संक्षिप्तं विवरणं प्रस्तूयते----

१- व्यासं प्रति जनमेजयस्य सृष्टि विषयकः प्रश्नः।

२- राजा शर्याति कथाया आरम्भः।

३- सुकन्यायाः प्रसन्नतायै च्यवनेन सह तस्याः पाणिग्रहणम्।

४- सुकन्याद्वारा च्यवनमुनेः सेवा तस्मिन्नेव समये अश्विनीकुमाराणामागमनम्।

५- अश्विनी कुमारेभ्यः च्यवनऋषिं नेत्रं तथा यौवनप्राप्तिः।

६- एकस्मिन् समये अरुणस्य पुत्रः सत्यव्रत नाम्ना प्रसिद्धोऽभूत् , तस्य पार्श्वे अधिकाः सम्पत्तिरासीत्। परन्तु सः स्वेच्छाचारी, कामी एवं मूर्खः आसीत्। अतः तस्य पितुः अरुणः तं स्वेच्छाचारिणं पुत्रं गृहात् निष्क्रान्तः। ततः अन्यान्यापराधकारणात् वसिष्ठः तं शापं प्रदत्तः, सः शापः कः, सोऽयम् भूमण्डलोपरि तव त्रिशंकु नाम्ना प्रसिद्धिः

भविष्यति। वसिष्ठद्वारा शापयुक्तो सत्यव्रतः कठिना तपस्या प्रारम्भं कृतः। तपस्या करणेन स विचारो कृतः यज्ञमपि कर्तव्यम् परन्तु वेदशिरोमणि ब्राह्मणाः यज्ञे आगन्तुमसमर्थाः व्यक्तीकृताः तदा स त्रिशंकुः खिन्नोभूत्वा अग्नेः चितायां प्रवेशं करिष्यामि इति निश्चयो कृतः। चितायां प्रवेश समये भगवत्याः महामायायाः स्मरणं कृतं तत्क्षणमेव स्वयं भगवती जगदम्बा तस्य सम्मुखे आक्रोश प्रकटिताः। सा भगवती सिंहारूढा आसीत्।

देव्युवाच---

किं ते व्यवसितं साधो हताशी मा तनुं त्यज ।
स्थिरोभव महाभाग पिता ते जरसान्वितः ।।०।।
राज्यं दत्वा वने तुभ्यं गंतास्ति तपसे किल ।
विषादं त्यज हे वीर परश्वोऽहनि भूपते ।।०।।
ने तुं त्वामागमिष्यन्ति सचिवाश्च पितुस्तव ।
मत्प्रसादात्पिता च त्वामभिषिच्य नृपासने ।।०।।
जित्वा कामं ब्रह्मलोकं गमिष्यत्येष निश्चयः ।
इत्युक्त्वा तं तदा देवी तत्रैवांतरधीयत ।।०।।

सप्तमस्कन्धस्य त्रयोदशचतुर्दशोऽध्याये इदमस्ति----

१- महाराज त्रिशंकोपरि ब्रह्मर्षि विश्वमित्रस्य कृपा।

२- विश्वमित्रस्य तपोवलेन त्रिशंकोः सदेहस्वर्गगमनम्।

३- राजा हरिश्चन्द्रस्य विशिष्टं विवरणं चतुर्दशोऽध्यायतः प्रारम्भात् सप्तविंशत्यध्याय पर्यन्तं सम्यग्रूपेण वर्तते।

४- सप्तमस्कन्धस्याष्ट विंशति तथा नवविंशत्यध्याये निम्नलिखिताः विशिष्टाः विषयाः ----

१- जगदम्बादुर्गायाः शताक्षी तथा शाकम्भरी नाम कथं जाता तस्येतिहासः सम्यक्तया वर्तते।

२- महागौरी, महालक्ष्याऽन्तर्ध्यानस्य कथा।

३- तयोः द्वयोः प्राकट्यस्यापि कथा।

४- सिद्धपीठानां विशिष्टं विवरणं विद्यते।

५- देवीद्वारा हिमालयं ज्ञानोपदेशः तथा ब्रह्मस्वरूपस्य वर्णनम्।

६- पूजा विधिः एवं फलश्रुत्याः वर्णनं सम्यगस्ति।

# अष्टम स्कन्धः

अष्टमस्कन्धस्य विशिष्ट विषयाणां संक्षिप्तं विवरणं दीयते----

१- सृष्ट्यारम्भे स्वायम्भुवमनुद्वारा देव्याः स्तुति सम्यग्रूपेण वर्णितं विद्यते विस्तरभयात् न लिखामि।

२- वाराहावतारस्य संक्षिप्ता कथा वर्णिता।

३- अष्टमस्कन्धस्याष्टमोऽध्याये---

(क) इलावृतवर्षे भगवान् शिवद्वारा श्रीहरेः संकर्षणरूपस्य वर्णनम्।

(ख) भद्राश्ववर्षे भद्रश्रवाद्वारा ह्यग्रीवरूपस्य वर्णनम् विद्यते।

(ग) हरिवर्षे प्रह्लादद्वारा नृसिंहरूपस्य वर्णनमस्ति।

(घ) केतुमालवर्षे श्रीलक्ष्मीद्वारा कामदेवरूपस्य वर्णनमस्ति।

(ङ) रम्यकवर्षे मनुद्वारा मत्स्यरूपस्य स्तुति उपासनायाः सम्यक्तया वर्णनमस्ति।

अस्य स्कन्धस्य नवम दशम एकादशोऽध्याये निम्नलिखिताः विशिष्टाः विषयाः वर्तन्ते।

१- हिरण्यमयवर्षे अर्यमाद्वारा कच्छपरूपस्य विशेषं वर्णनमस्ति।

२- उत्तरकुरुवर्षे पृथ्वीदेवीद्वारा वाराहरूपस्य कथा संक्षेपेण वर्णिता विद्यते।

३- किम्पुरुषवर्षे श्रीहनुमतद्वारा श्रीरामचन्द्ररूपस्य वर्णनम्।

४- भारतवर्षे श्रीनारदद्वारा नारायणरूपस्य स्तुतिः -- उपासनायाः वर्णनं तथा भारतवर्षस्य महिमायाः कथनमस्ति।

अनेनैव प्रकारेण द्वादशत्रयोदशोऽध्यायेऽपि निम्नविषयाः वर्तते----

१- प्लक्ष, शाल्मलि, कुश, क्रौञ्च, काक, तथा पुष्करद्वीपानां वर्णनं विद्यते। १४-१५अध्याये लोकालोकपर्वतस्य व्यवस्था तथा सूर्यस्य गतेः वर्णनमस्ति। १६-१७- १८अध्यायेषु

चन्द्रमादयः गतेः वर्णनम् , शिशुमारचक्रस्य एवं राहुमण्डलादेः वर्णनमस्ति। १९-२०अध्याये अलत, वितल, सुतल, तलातल, महातल, रसातल, तथा पाताललोकानां वर्णनं सम्यग्रूपेणास्ति। २१अध्याये भगवाननन्तस्य यशोगानं तथा नरकस्य नामावली अस्ति। २२-२३अध्याये तामिस्रादयः नरकाणां वर्णनम्। २४अध्याये देव्या उपासनायाः प्रसंगस्य विशिष्टं वर्णनमस्ति।

## नवमस्कन्धः

नवमस्कन्धः विस्तुतमस्ति तस्मिन्स्कन्धे पञ्चाशदध्यायाः सन्ति।

१- पञ्चविध प्रकृतेः स्पष्टीकरणमेवंमंशः। अंशस्य विषये किंचित्प्रकाशं ददामि-- विश्वस्मिन् या स्त्रियः सन्ति, ताः सर्वाः कलाया अंशः ज्ञातव्यम्। अतः स्त्रिन्य अपमानात् प्रकृते अपमानं भवति।

**या याश्च ग्रामदेव्यः स्युस्ताः सर्वाः प्रकृतेः कला ।**
**कलाशांस समुद्भूता प्रतिविश्वेषु योषितः ।।१।।**

---

१- श्रीमद्देवीभागवत स्क०९ अ०१ श्लोक १३७ ।

२- परब्रह्म श्रीकृष्णः तथा राधायाः प्रकटिताः चिन्मयदेव्याः एवं देवानां चरित्रचित्रणं द्वितीयोऽध्याये वर्तते।

३- सरस्वती पूजायाः विस्तृतं विधानमस्ति।

४- याज्ञवल्क्यद्वारा सरस्वत्याः स्तुतिः।

५- विष्णोः पत्नी लक्ष्मी,सरस्वती एवं गङ्गायाः परस्वरं शापवशात् भारतवर्षेऽऽगमनम्। भगवतः मुखारविन्दात् भक्तानां तथा लक्षणानां विशदं वर्णनमस्ति।

६- पृथिव्या उत्पत्तिः, प्रथिव्याः ध्यानमेवं पूजनप्रकारः। पृथिवीं प्रति शास्त्रविपरीतव्यवहारकरणेन नरकानां प्राप्तेः वर्णनं विद्यते।

७- गङ्गाया उत्पत्तिविषस्य विस्तृतप्रसंगः विद्यते। राधायाः गङ्गांप्रति शेषः, श्रीकृष्णं प्रतिराधायाउपालम्भः,राधाभ-यात् गङ्गा कृष्णचरणाम्भोजे विवेश। जलाभावपीडितानां देवानां गोलेके गमनम्। ब्रह्मणः स्तुत्याः राधाप्रसन्ना जाता, देवान् प्रति श्रीकृष्णस्यादेशः, इत्यादिकं सर्वं विस्तृतवर्णनं त्रयोदश चतुर्दशोऽध्यायौ वर्तेते।

८- तुलस्याः शंखचूडस्य विवाहः तथा शंखचूडस्य

पुष्पमद्रानद्याः तटोपरि गमनम् , तत्र भगवतः शिवस्य दर्शनस्य विशदवार्तालापः।

९- शंखचूडवेषधारी श्रीहरिद्वारा तुलस्याः पतिव्रतभङ्गः, शंखचूडस्य गोलोकगमनम् शालिग्रामस्य पाषाणरूपे भारतवर्षे-ऽऽगमनम् , तुलस्या महिमायाः वर्णनम् , शालिग्रामस्य विभिन्न लक्षणमेवं महत्तवस्य वर्णनमस्ति। सावित्रीधर्मराजस्य प्रश्नोत्तरम् , भगवत्यालक्ष्म्या प्राकट्यम् तथा तस्याः सम्बन्धे विस्तृतं वर्णनम्। आदि गौः सुरभीदेव्या उपाख्यानम् नवमस्कन्धस्य विशिष्टं विवरणं समाप्तम्।

## दशम स्कन्धः

श्रीमद्देवीभागवतस्य दशमस्कन्धे त्रयोदश अध्यायाः सन्ति तेष्वध्यायेषु ये विशिष्टाः विषयाः वर्तन्ते तान् सर्वान् संक्षेपेण वर्णयामि---

१- स्वायम्भुवमनो उत्पत्तिः।

२- भगवत्याः विन्ध्यगिरे गमनम्।

३- विन्ध्यद्वारा सूर्यस्य मार्गावरोधः।

४- भगवतः विष्णोः सम्मत्या देवानां काश्यां अगस्त्यमुनिशरणे गमनम्। अगस्त्यस्य कृपया सूर्यस्य मार्गं सुलभं जातम्।

५- वैवस्वत सावर्णि, दक्षसावार्णि, मेरूसावर्णि मनूनां वर्णनं विस्तृतरूपेण विद्यते।

६- अरुण नामक दानवस्य वरलाभं जातम्।

७- देवानां विजयम्।

८- भ्रामरी देवीद्वारा दानवस्य वधः, ततः भ्रामरीदेव्याः स्तुतिः देवाः कृताः।

९- भ्रामरीदेव्या अयं विषयः देव्याः माहात्म्येन सम्बन्धः वर्तते अतः अस्याः देव्या चरित्रं यः श्रणोति पठति वा तस्य कल्याणं निश्चितं भवतीति।

## एकादश स्कन्धः

एकादशस्कन्धे चतुर्विंशत्यध्यायाः वर्तन्त, तेष्वध्यायेषु ये विशिष्टाः विषयाः विद्यन्ते तेषामत्र संक्षेपेण वर्णयामि---

१- प्रथमद्वितीयोऽध्यायौ सदाचारस्य विस्तृतं वर्णनमस्ति।

२- तृतीयचतुर्थाध्यायौ रुद्राक्षस्य माहात्म्य कथनम्।

३- भूतशुद्धिः, भस्म माहात्म्यम् , प्रातः सन्ध्याया वर्णनम्।

४- गायत्री महिमायाः वर्णनम्।

५- गायत्र्याः विशिष्टा पूजाविधेः वर्णनम्।

६- मध्याह्न सन्ध्या, तर्पणम् , तथा सायंसन्ध्यायाः वर्णनमस्ति।

७- गायत्रीपुरश्चरण प्राणाग्निहोत्रविधेः वर्णनम्।

८- प्राजापत्यादयः व्रतानां सुस्पष्टं वर्णनम्।

९- कामनासिद्धिः, उपद्रवशान्त्यर्थं गायत्र्याः विविध प्रयोगाणां वर्णनं विशेषरूपेणास्ति।

## द्वादश स्कन्धः

अस्मिन्द्वादशस्कन्धे विशिष्ट विषयाणां परिचिन्तनं संक्षितरूपेण करिष्ये। अस्मिन्स्कन्धे चतुर्दश अध्यायाः सन्ति।

प्रथमद्वितीयाध्यायौ निम्नाङ्किता विषया----

१- सदाचारस्य विषये नारदस्य भगवतः नारायणेन प्रश्नरस्ति।

२- नारायणद्वारा गायत्री भगवत्याः प्रधानतायाः प्रतिपादनम्।

३- गायत्र्याः वर्णनां शक्तिः, रूपम् तथा मुद्राणां वर्णनम्।

चतुर्थ पञ्चमाध्यायौ अयं विषयः----

१- गायत्री हृदयन्यासः गायत्रीस्तोत्रस्य वर्णनम्।

२- गायत्री सहस्रनाम षष्ठोऽध्यायेस्ति।

३- दीक्षाविधिः सप्तमाध्यायेऽस्ति।

४- अष्टमाध्याये--- देवानां विजयगर्वम्। इन्द्रं भगवती उमायाः दर्शनम्।

५- नवामाध्याये-- गायत्र्या अनुग्रहेण गौतमद्वारा असंख्यब्राह्मणपरिवाराणां रक्षायाः वर्णनम्।

६- ब्राह्मणानां कृतघ्नेन गौतमद्वारा ब्राह्मणान् घोरं शाप-प्रदानस्य वर्णनम्।

७- दशमाध्याये ११मणिद्वीपस्य वर्णनम्।

८- त्रयोदश चतुर्दशोऽध्याये--- जनमेजयद्वारा अम्बायज्ञं तथा देवीभागवस्य महिमायाः विस्तृतं वर्णनमस्ति।

••••••••••••••••••••••••••••••••••••••••••

## ⁎तृतीयोऽध्यायः⁎

**देवीभागवतोक्त विविधस्कन्धेषु कुत्र कुत्र तंत्रस्य प्रभाव इति समीक्षणम्।**

महामुनिव्यास रचित श्रीमद्देवीभागवते द्वादशस्कन्धाः वर्तन्ते। प्रत्येकस्कन्धेषु भिन्नाः भिन्नाः विषयाः वर्णिताः सन्ति। तत्र सर्वेषु स्कन्धेषु कुत्र कुत्र तंत्रस्य प्रभावः विद्यते इति विषयमधिकृत्य समीक्षणं विधास्यते। श्रीमद्देवीभागवतं प्रति मयिधारणा इयं विद्यते यत् सम्पूर्ण देवीभागवतं तंत्रमेवास्ति इत्यत्र नास्ति संशीतिः परन्तु स्कन्धेषु यस्मिन् अध्याये विशेषरूपेण तंत्रस्य प्रभावः तं समीक्ष्ये।

प्रथमस्तु मया देवीभागवतस्य माहात्म्य प्रसंगे अस्य श्रवणेन किं फलं प्राप्नोति इति विषयं प्रतिपादनीयः। यस्मिन् देवीभागवते त्रिलोकजननी नित्यस्वरूपा भगवती दुर्गायाः चरित्राणि गायन्ति देवाः तं देवीभागवतं नाम नामकं पुराणादधिकं नास्ति कोऽपि पुराणमस्ति। स्वामी कार्तिकियः उच्यते संक्षेपेण तस्याः माहात्म्यम्। या देवी नित्यस्वरूपा, सच्चिदानन्दमयाः यस्याः श्री विग्रहः, तथा भुक्ति मुक्ति प्रदात्री यस्याः स्वभावः,

सा भगवती जगदम्बिका श्रीमद्देवीभागवते स्वयं विराजमाना तिष्ठन्ति। तस्याः देव्याः वाङ्मयीमूर्तेः दर्शनेन संसारे केचन अपि पदार्थाः न दुर्लभाः भवन्ति। श्रुतं यत् एकस्मिन् समये देवाधिदेव भगवान् शिवः प्राणप्रिया पार्वत्या सहप्रसन्नतापूर्वकं विहरेत् तस्मिन् समये मुनयः शिवदर्शनालालसा तत्राजग्मुः तदा तान् मुनीन् दृष्ट्वा गिरिजा व्रीडिताऽभवत्।

**रममाणौ तु तौ दृष्ट्वा गिरिशौ संशितव्रताः ।**
**निवृत्ता मुनयो जग्मुः वैकुण्ट निलयं तदा ।।०।।**
**प्रियायाः प्रियमन्विच्छञ्दिवोऽरण्यं शशाप ह ।**
**अद्यारभ्य निषेद्योऽत्र पुमान् योषित्भवेदिति ।।०।।**

भावार्थः--- यस्मिन् समये मुनयः तत्र गताः शिवपावतीमपश्यताम् तदा सर्वे मुनयः वैकुण्ठे गताः परन्तु शिवः प्रियायाः प्रसन्नार्थं शापं शशाप, अघतः यः पुरुषः अस्मिन्वने प्रवेशं करिष्यति तस्या आकृतिः योषिता भवेत्। तस्मात् समयात् कोऽपि नहि तत्र गच्छति। परन्तु महाराजः सुद्युम्न सहसा तत्र प्रविष्टः। तदा सुद्युम्नः प्रमदोत्तमा बभूव तथा तेज सह यः अश्वः आसीत् सोऽपि बडवा जाता। संक्षेपेणेदमस्ति

---

१- देवीभागवतमाहात्म्य अ०३ श्लोक २२,२३

यत् तदा सुद्युम्नः स्त्री रूपे बने वने विचरन् सन् तदैव बुधः तां दृष्ट्वा लुब्धायामानाः। तदा सा स्त्री बुधस्य पत्नी जाता किञ्चितत्समये व्यतीते जाते तस्याः गर्भात् पुरूरवा नामकमेकं पुत्रं जनयामास। एकदा सा स्त्री पूर्वजन्मवृत्तान्तं स्मरणं कृत्वा अतिदुःखिता जाता। तदा सा वसिष्ठस्याश्रमे गता, वसिष्ठमुनिं प्रणम्य पूर्ववृत्तान्तं निवेदया मास। वसिष्ठं सर्वं वृत्तान्तं ज्ञात्वा कैलासे शिवस्य पार्श्वे जगाम। शिवस्य स्तुतिं प्रारम्भं चकार।

**शिवाय शिवरूपाय प्रपन्नभय हारिणे ।**
**नमो वृषीवाहाय शरणपाप परमात्मने[१] ।।०।।**

इत्थं प्रकारेण वसिष्ठद्वारा स्तुतिं श्रुत्वा शिवः प्रोवाच---

**वरं वरय विप्रर्षे यत्ते मनसि वर्तते[२] ।।०।।**

शिवं प्रसन्नं दृष्ट्वा वसिष्ठ उवाच भो भगवन्! इला पुंस्त्वं भवेत् इति वरं देहि। तदा शिवः यो हि वरं दत्तः सस्त्विदम् ''मासं पुमान् स भविता मासं नारी भविष्यति''[३] वरं प्राप्य

१- श्रीमद्देवीभागवत का० अ०३ श्लोक ३५ ।

२- श्रीमद्देवीभागवत का० अ०३ श्लोक ४० ।

३- श्रीमद्देवीभागवत का० अ०३ श्लोक ४१ ।

वसिष्ठः भगवती जगदम्बिकां पार्वतीं प्रणनाम। एवं पार्वत्याः स्तुतिं प्रारम्भं कृतवान्।

जयदेवि महादेवि भक्तानुग्रहकारिणी ।
जय सर्वसुराराध्ये जयानंतगुणालये ।।०।।
नमो नमस्ते देवेशि शरणागतवत्सले।
जय दुर्गे दुःख हन्त्री दुष्ट दैत्यनिषूदिनी[1] ।।०।।

तं स्तुतिं श्रुत्वा भगवती पार्वती प्रसन्ना जाता, वसिष्ठं प्रति उवाच। भो मुनिः।

''सुद्युम्न भवनं गत्वा कुरु भक्तया मदर्चनम्''
सुद्युम्न श्रावय प्रीत्या पुराणं मत्प्रियंकारम्
देवीभागवतं नाम नवाहोभिर्द्विजोत्तम ।।०।।
श्रवणादेव सततं पुंस्त्वमस्य भविष्यति ।
इत्युक्तवा च तिरोधानं गच्छतः सम शिवेश्वरौ[2] ।।०।।

शिवेश्वरौ गते सति वसिष्ठः सुद्युम्नं देव्या आराधना कर्तुं आदेशितः। तथा महाराजं सुद्युम्नं देवीभागवतं नामकं पुराणं श्रावयामास नवरात्रविधानेन। देवीभागवतं श्रुत्वा सुद्युम्नं

१- श्रीमद्देवीभागवत मा० अ०३ श्लोक ४४,४५ ।

२- श्रीमद्देवीभागवत मा० अ०३ श्लोक ५०,५१,५२ ।

पुस्त्वं लेभे।

अस्याः कथायास्तात्पर्यमिदं यत् देवीभागवतस्य माहात्म्ये शक्तयागमस्य प्रभावो विद्यते शिवागमस्यापि च। तन्त्रालोके इदमस्ति यत्----

> सांख्यं योगं पाञ्चरात्रं वेदांश्चैव न निन्दयेत् ।
> यतः शिवोद्भवाः सर्व इति स्वच्छन्दशासने ।।०।।

सम्पूर्णं देवीभागवतं तन्त्रमस्ति अतः कलियुगे तन्त्रस्योपयोगिता विद्यते, कलियुगे देवी भागवतं श्रोतव्यम्।

इदमपि कथ्यते यत्श्रुतिः सत्ययुगाय, स्मृतिस्त्रोतायुगाय, पुराणानि च द्वापर युगायाधिकमुपयोगिनि किन्तु कलियुगे तन्त्रमेवाधितरं प्रभावि अतः यत्र उभयोः सम्मेलनं विद्यते, यथा श्रीमद्देवीभागवते पुराणमपि तन्त्रमप्यस्ति अतः अतिमहत्वपूर्वमस्ति। पुराणेषु लोक प्रसिद्धः सामान्योधर्मी व्रतोपवास पर्वानि च विभिन्नेराख्यानैः सह वर्णितानि सन्ति तेषु प्रतिपादिता साधना गुह्या नास्ति परन्तु तान्त्रिकी विद्यते।

---

१- तन्त्रालोक ३५/३

देवीभागवतपुराणस्य श्रवण विधिः, श्रवणस्य महत्फलं, माहात्म्यवर्णनमिति सर्वं तंत्रागमे आगच्छन्ति अतः विद्वान्पण्डितमाहूय तदा पुराणश्रवणं विधिना श्रोतव्यम्। ज्येष्ठमासादारभ्य षटमासपर्यन्तं पुराणश्रवणाय उत्तमोत्तमः समयः देवीभागवते कथितमासीत्। शुभवक्षत्रेषु शुभवारेषु पुण्यतिथिषु देवीभागवतनामकं तान्त्रिकं पुराणं श्रूयात्। भगवती जगदम्बा प्रीत्यर्थं नवरात्रेषु तान्त्रिकविधिना देवीं पूजायित्वा तदनन्तरं नवदिनपर्यन्तं देवीभागवतं श्रोतव्यमिति। भगवती जगदम्बिकायां ये जनाः पण्डिताः वा भक्तिं कुर्वन्ति ते एव स्थित्वा पाठं कर्तव्यम्। श्रीमद्देवीभागवतस्य पुस्तकं सुन्दरेण अक्षरेणयुक्तं भगवत्याः वाङ्मयीमूर्तिरस्ति। सम्पूर्णोपचारेषु अस्याः पूजा परमाश्यकी भवति। कथाया निर्विघ्न समाप्त्यर्थं पञ्चब्राह्मणानां वरणं कर्तव्यम्। ते ब्राह्मणाः नवार्णमन्त्रजपं कुर्युः ततः दुर्गासप्तशती पाठं कर्तव्यमिति। तदनन्तरं प्रदक्षिणां कृत्वा महामायाजगदीश्वर्याः स्तुतिं कारयेत्।

स्तुतिः=

**कात्यायनि महामाये भवानि भुवनेश्वरि ।**
**संसार सागरे मग्नं मामुद्धर कृपामये ।।०।।**
**ब्रह्मविष्णुशिवाराध्ये प्रसीद जगदम्बिके ।**
**मनोभिलषितं देवि वरं देहि नमोस्तुते ।।०।।**

कथावाचकं व्यासस्वरूपं मत्वा समाहितचित्तेन तस्य पूजा कर्तव्या। धर्मार्थकाममोक्षाः एते चत्वारः पुरुषार्थाय प्राप्त्यर्थं सावधानतया कथा श्रोतव्यम्।

**देविभक्तविहीना ये पाखण्डा हिंसका खलाः ।**
**विप्रद्रुहो नास्तिका ये न ते योग्याः कथाश्रवे ।।०।।**

अनेन प्रकारेण बहवः नियमाः कथिता सर्वमत्र न लेखिष्ये परन्तु ममदृष्टि इयं यत् सर्वे नियमाः तंत्रयुक्ता अतः नियमपूर्वकमेव कथा श्रोतव्यम्। निष्कामपुरुषाः कथाश्रवणमात्रेणैव पवित्रो भूत्वा आवागमनात् रहिताः भवन्ति, यतो हि स्वजनान् भक्तान् भोगं मोक्षञ्च प्रदानकरणं भगवतीजगदम्बिकायाः स्वभावमस्ति। पुस्तकस्य कथावाचकस्य च प्रतिदिनं पूजा कर्तव्यम्। कथासमाप्तिदिने सम्पूर्णदोषानां शमनार्थं गायत्रीसहस्रनाममथवा विष्णुसहस्रनामकस्य पाढं कर्तव्यम्। श्रीमद्देवीभागवतं गायत्रीस्वरूपमस्ति। श्रीमद्देवीभागवतं सुन्दरमक्षरं लिखित्वा रेशमीवस्त्रेणवेष्टितं कृत्वा सुवर्णसिंहासनोपरिस्थाप्य अष्टम्यां नवम्यां वा तिथौ कथावाचकस्य विधिपूर्वकं पूजां कृत्वा पुस्तकं दानं कर्तव्यम्। एवं करणेन सः पुरुषः भोगं मुक्तवा अन्ते दुर्लभं मुक्तिं प्राप्नोति।

गायत्री जपं सर्वप्रकारेण श्रेष्ठतमतन्त्रमस्ति। श्रीमद्देवीभागवते गायत्रीविषये यद्यस्ति तदत्र उल्लिख्यते---

न गायत्र्या परोधर्मो न गायत्र्याः परंतपः ।
न गायत्र्या समो देवो न गायत्र्या परो मनु ।।०।।
गातारं त्रायते यस्माद्गायत्री तेन सोच्यते ।
साऽत्र भागवते देवि स रहस्या प्रतिष्ठिता ।।०।।
अतो भागवतस्यास्य देव्या प्रीतिकरस्य च ।
महांत्यपि पुराणानि कलां नार्हन्ति षोऽशीम् ।।०।।

या गायत्री शरीरस्य रक्षां करोति सा गायत्री उच्यते, सा एव गायत्री अस्मिन्देवीभागवते सरहस्या प्रतिष्ठिता वर्तते। इदं देवीभागवतं महापुराणं जगदम्बिकायाः प्रसन्नार्थं तान्त्रिकं साधनमस्ति। श्रीमद्देवीभागवतं परमपावन पुराणमस्ति, ब्राह्मणानामेकमात्रं धनमस्ति, नारायणस्वरूपो धर्मनन्दनयुधिष्ठिरः अस्मिन् देवीभागवते धर्मस्याधिकं व्याख्या कृता वर्तते। गायत्र्याः रहस्यम्, निवासभूताभगवत्याः मणिद्वीपस्य वर्णनमेवं स्वयंभगवतीद्वारा हिमालयेन कथिता गीतायाः वर्णनमपि विद्यते।

१- श्रीमद्देवीभागवत मा०अ०५ श्लोक ९४-९६ पर्यन्तम्।

**श्रीमद्भागवतं पुराणममलं यद्ब्राह्मणानां धनं ।**
**धर्मो धर्मसुतेन यत्र गदितौ नारायणेनामलः ।।**
**गायत्र्याश्च रहस्यमत्र च मणिद्वीपश्च संवर्णितः ।**
**श्री देव्याहिमभूभृते भगवती गीता च गीता स्वयम्[१] ।।०।।**

मणिद्वीपोपरि भगवती जगदम्बिकायाः भव्यनिलयं विराजमानो वर्तते, इदं भवनं चिन्तामणि आदिरत्नै५ निर्मितः। अमृतपूर्णानि कूपानि तथा दिव्यवृक्षाः तस्य मणिद्वीपस्य शोभां वर्द्धयन्ति। भगवतः शिवस्य हृदये स्थानप्राप्तकर्त्री प्रसन्नवदनाभगवती जगदम्बिका तत्र विराजते। ब्रह्मा, विष्णुः शिवश्च यस्याः निरन्तर माराधनां कुर्वन्ति तान्त्रिकरूपेण उपासनामपि कुर्वन्ति सा भगवती मणिद्वीपस्याधिष्ठात्री जगदम्बिका सर्वेषां कल्याणं कुर्वन्तीति।

**यस्याः प्रभावमखिलं न हि वेदधाता**
**नो वा हरिर्न गिरिशो नहि चाप्यनन्तः ।।**
**अंशांशका अपि च ते किमुतान्यदेवा**
**स्तस्यै नमोस्तु सततं जगदम्बिकायै ।।०।।**
**यत्पादपंकजरजः समवाप्य विश्वं ।**
**ब्रह्मासृजन्यनुदिनं च विभर्ति विष्णुः ।।**
**रुद्रश्च संहरति नेतरथा समर्था**
**स्तस्यै नमोस्तु सततं जगदम्बिकायै[२] ।।०।।**

---

१- श्रीमद्देवीभागवत माहा० अ०५ श्लोक ९७ ।

२- श्रीमद्देवीभागवत माहा० अ०५ श्लोक ९९,१०० ।

उपर्युक्त श्लोकौ द्वौ पठिताभ्यां पाठकस्य हृदयमावर्जयतः। तौ श्लोकौ तन्त्रदृष्ट्या अतिमहत्वपूर्ण विद्येते। अग्रेऽपि एकः श्लोकः दीयते यः पराम्बां कृते वर्तते----

**सुधाकूपारांत स्त्रिदशतरुवाटी विलासिते**
**मणिद्वीपे चिन्तामणिमयगृहे चित्ररुचिरे ।**
**विराजन्तीमम्बां परशिवहृदि स्मेरवदनां**
**नरोध्यात्वा भोगं भजति खलु मोक्षं च लभते[१] ।।०।।**

श्रीमद्देवीभागवतस्य माहात्म्ये तान्त्रिकानुशीलनमलम् ।

## प्रथमस्कन्धः

हिन्दूनां समस्त साधनायाः कुञ्जिका अस्ति, 'तन्त्रम्'। सर्वेषां सम्प्रदायानां सर्वप्रकारस्य साधनायाः गूढरहस्यं तन्त्रशास्त्रे निहितमस्ति। तन्त्रः केवलं शक्ति उपासनायाः एव प्रधानावलम्बनं नास्ति अपि तु साधनानामेकमात्रमाश्रयमस्ति। तन्त्रे स्थूलतमसाधनप्रणाल्यात् अतिगुह्यत्तमामन्त्रशास्त्राणि तथा अति गुह्यतर योगसाधनानामपि समस्ता क्रियाकौशलादीनां सविस्तरं वर्णनं विद्यते। तन्त्रार्गते दार्शनिकतत्त्वानामपि सूक्ष्म विवेचनं

१- श्रीमद्देवीभागवत मा० श्लोक १०१ ।

सविस्तरं वर्णनमस्ति। श्रीमद्देवीभागवते तन्त्रोक्तसाधनाजाले प्रवेशकरणं सहजसाध्यं नास्ति। येन प्रकारेण मनुष्यस्य प्रकृतिः सात्त्विकराजसिकतामसिक भेदेन त्रिः प्रकाराः विद्यन्ते तथैव तन्त्रशास्त्रमपि सात्त्विकराजसिकतामसिकभेदेन त्रिः प्रकारो विद्यते। तथा अस्य साधनप्रणालीरपि गुणभेदेन त्रिप्रकारस्य व्याख्याता भवति। यस्य यथा प्रकृतिः रुचि वा भवेत् तदनुसारमेव साधनपथग्रहणं कृत्वा साधन करणेन सः जीवनं कृतकृत्यं कर्तुं शक्यते। शक्तिः येन प्रकारेण देवस्वभावानां दैवीगुणयुक्तजीवानां वा जननीरूपा विद्यते, तथैव असुरागुण युक्ताः असुराणामपि जननी विद्यते। अस्मात् कारणादेव असुराः देवाश्च उभयो तां भगवतीमुपासनायां प्रवृत्ताः भवन्ति। अतः शास्त्राणि उभयप्रकारस्य साधनप्रणालीमुच्यन्ते।

भारतवर्षे ये वेदानामनुसरणं कर्तुं चलन्ति ते साधारणतः पञ्चोपासकसम्प्रदायेषु विभक्ताः सन्ति।

(१) गाणपत्यम् (२) सौरम् (३) शाक्तम् (४) वैष्णवम् तथा शैवः। वस्तुत इमे पृथक् देवानामुपासकाः न सन्ति अपि एकैव विश्वतोमुखस्य भगवतः पृथक् पृथक् पञ्चभावेषु उपासनां कुर्वन्ति। पद्मपुराणे भगवत उच्यन्ते यत् ---

सौराश्च शैव गाणेशा वैष्णवाः शक्तिपूजाकाः ।
मामेव ते प्रपद्यन्ते वर्षाम्भिः सागरं यथा ।
एकोऽहं पञ्चधाभिन्नः क्रीडार्थं भुवनेऽखिले ।।०।।

वर्षायाः जलं येन प्रकारेण चतुर्दिक् आगत्य समुद्रे मिलति तथैव गापापत्यं, सौराः, वैष्णवाः, शैवाः, तथा शाक्ताः एते सर्वे आगत्य मामेव प्रपद्यन्ते। अहमेव क्रीडार्थं अखिले भुवने पञ्चधा विभक्तोऽस्मि। अस्माद्धेतोः साधकप्रवराः पुष्पदन्त उच्यन्ते यतवेदाः, सांख्यम् , योगः, पाशुपतम् , तथा वैष्णवम्‍तानुसारिणः भिन्न भिन्न भावेषु युष्माकमेव व्याख्यां कुर्वन्ति। यथा----

त्रयीसांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रूचीनां वैचित्र्यादृजुकुटिल नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसा मर्णव इव ।।०।।

अतः शास्त्राण्युर्पादशन्ति----

यो ब्रह्मा स हरिः प्रोक्तो यो हरिः स महेश्वरः
या काली सैव कृष्णः स्यात् यः कृष्णः सैव कालिका ।
देवदेवीं समुद्दिश्य न कुर्यादन्तरं क्वचित्
यत्तद्भेदो न मन्तव्यः शिवशक्तिमयं जगत् ।।०।।

श्रीमद्भागवते चतुर्थस्कन्धे अस्ति यत्----

**त्र्याणामेकभावानां यो न पश्यति वै भिदाम् ।**
**सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ।।०।।**

त्रिषु भावेषु (शिव-शक्ति-विष्णुरूपाणां) कश्चिदपि भावं यः पृथक् न मन्यते सैव तस्य भूतात्मनः रूपे दर्शनं कर्तुं शक्यते तथा सैव तस्य भूतात्मनः रूपे दर्शनं कर्तुं शक्यते तथा सैव शान्तिमधिगच्छन्ति।

यद्यपि सर्वे देवा तस्य एकस्यैव भगवतः विभिन्नानि स्फुरणमात्राणि सन्ति, तथापि मनुष्यः स्वयं स्वतन्त्रतयोपास्य देवानां ग्रहणं कर्तुं न शक्यते यदि ग्रहणं चेत् तहर्युचितं न भवति। शास्त्रविधिना एव सर्वं कार्यमावश्यकमस्ति। सद्गुरुव एव जीवस्य प्रकृतेः विचारं कृत्वा तस्योपास्यदेवतायाः निर्देशं कर्तुं शक्यन्ते। भिन्न भिन्न मनुष्याणां येन प्रकारेण भिन्न भिन्न रसे आसक्तिः भवति, तथैव जीवस्यापि प्राक्तनकर्मानुसारेण भिन्न भिन्न देवेषु आसक्तिः भवति, तथा स्व स्व स्वभावानुसारेणैव कश्चित् जीवस्य पुरुषदेवतां प्रति, कश्चिद् स्त्री देवीं प्रति तथा तेभ्यः देवेभ्यः विविधवर्णानां प्रति स्वाभाविक प्रवृत्तिः भवति। एषां सर्वेषां विना विचारे देवतायाः नामजपं तथा रूपध्यानं करणेसति साधकः शुभफलं प्राप्तं न करोति,

अतः तन्त्रशास्त्रे एषां विषयाणां बहुविचारं तथा सिद्धान्तानां वर्णनमस्ति।

तन्त्रस्य मतेन देव्या उपासनौवैकमात्रं शक्तयुपासना नास्ति, अपि तु गणपत्यं, सौराः वैष्णवाः, शैवाः शाक्ताश्च एते सर्वे शक्तयुपासकाः सन्ति। पुरुषस्तु निर्गुणः, निर्गुणस्योपासना न भवति। यद्यपि उपास्यदेवता पुरुषः भूते सति वास्तविकरूपे अत्रापि शक्तेः एव उपासना भवति, शक्तिरेवास्माकं ज्ञानस्य विषयः भवति। शक्तिमान् अथवा पुरुषः ज्ञानातीतः सत्तामात्र अस्ति। अयं कश्मिश्चिदपि समयं कस्यापिबोधस्य (ज्ञानस्य विषयो) न भवति। वेदे तथा तन्त्रे ब्रह्माणं सच्चिदानन्दमुच्यते। अस्मिन् सदंशमेव पुरुषभावमथवा निर्गुणभावमस्ति। तथा चित् तथा आनन्दांशमेव गुणयुक्तभावमर्थात् प्रकृतिरस्ति। अस्याः प्रकृतेः द्वारैव पुरुषस्य परिचयं मिलति। सांख्यदर्शनः पुरुषस्य प्रकृतेः विचारः वर्तते। श्रीमद्भगवद्गीतायां भगवतो कृष्ण उच्यते यत्---

**ममयोनिर्महब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत[१] ।।०।।**

---

१- श्रीमद्भगवतेऽपि अ०१४ श्लोक सं० ३ ।

**सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता[१] ।।०।।**

कृष्ण अर्जुनं प्रति उच्यते भारत! मम योनि अर्थात् परमेश्वरस्य गर्भाधानस्थानमस्ति, तस्मिन् अहं गर्भं अर्थात् जगत विस्ताराय चिदाभासं निक्षेपं करोमि, तस्मादेव सर्वभूतानामुत्पत्तिः भवति, अतः कौन्तेय! मनुर्ष्याद सर्वयोनिषु या स्थावरजङ्गमात्मक मूर्त्तय उद्भूताः भवन्ति तासु सर्वासु महद्ब्रह्म अथवा मातृस्थानीया प्रकृतिरस्ति, तथाऽहं गर्भाधानकर्ता पिता अस्मि। श्रीमद्भगवतेऽपि लिखितं वर्तते----

**दैवा त्क्षुभिमतधर्मिण्यां स्वस्यां योनौ परः पुमान् ।**
**आधत्तवीर्यं सासूत महत्तत्त्वं हिरण्मयम्[२] ।।०।।**

जीवस्यादृष्टकारणात् प्रकृतेः सर्वेषां गुणानां क्षुब्धेसति परमपुरुषः स्व प्रकाशस्थानरूप प्रकृतौ-- योनौ स्व वीर्यस्याधानं कुर्वन्ति तदा तस्याः प्रकृतेः महत्तत्त्वमुत्पन्नं भवति। अतः तन्त्रोक्त प्रकृतिः केन प्रकारेण वर्तते इत्यस्योपरि विचारः प्रस्तूयते--

---

१- श्रीमद्भगवद्गीता अ०१४ श्लोक सं० ४ ।

२- श्रीमद्भागवत २/२६/१९/

तन्त्रोक्तप्रकृतिरपि सांख्यस्य प्रकृते समानं जडं नास्ति। सा पूर्ण चैतन्यमयी प्रकृतिरस्ति। तन्त्रानुसारेण शिवः साक्षात् परब्रह्म अस्ति सः जाग्रदवस्था भिमानी, स्वप्नावस्थाभिमानी, तथा सुषुप्त्यवस्थाभिमानी पुरुषविशेषः नास्ति स तु तुरीय ब्रह्म अस्ति।

शारदातिलकनामके गन्थेऽस्ति---

**निर्गुणः सगुणश्चेति शिवोज्ञेयः सनातनः ।**
**निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ।।०।।**
**सच्चिदानन्द विभवात् सकलात्परमेश्वरात् ।**
**आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः ।।०।।**

शिवः साक्षात् परमब्रह्म सन्ति तस्य द्वे विभागे स्तः, सगुणः निर्गुणश्च। मायोपहित परब्रह्म एव सगुणः, तथायं ब्रह्म यदा मायया अनुपहितो भवति तदा स निर्गुणः। सच्चिदानन्दस्वरूप परब्रह्मणः मायोपहितो भूतेसति तेषु (ब्रह्मणि) शक्ते आविर्भावो भवति तस्याः शक्तेः नादः अथवा महत्तत्त्वं तथा नादात् विन्दु अथवा अहङ्कारतत्त्वमुत्पन्नं भवतीति।

तन्त्र शब्द विमर्शः---

तन्त्रायति, तन्त्रयते यः सः तन्त्रः इति विग्रहानुसारेण

शासनम् , नियन्त्रणम् , पालन-पोषणं, आद्यर्थानामुद्भावनं भवति। चुरादि णिजन्तप्रयोगेणापि प्रेरणा इत्यर्थोऽपि सूचितो भवति। तनादि तनु विस्तारवाची धातुत्वात् ष्ट्रन् प्रत्यये कृते सति निष्पन्नतन्त्राशब्दस्य विभिन्ना अर्थाः भवन्ति। व्यवहारस्य सर्वेषां क्षेत्रे तन्त्रस्य प्रयोगो भवति। ''कर्मणां युगपद्भावस्तन्त्रम्'' (कात्यायन) ''जितमनसिजतन्त्रम्'' प्रयोग अपि अस्य विभिन्ना आयामानां पक्षे संकेतमस्ति। स्वतन्त्र-परतन्त्र शब्दैः जीवनस्य भौतिक आध्यात्मिक प्रर्थानां पक्षे स्वतः दृष्टि गच्छति। ''तन्त्रभिः पञ्चभिरेतच्चकारशास्त्रम्'' (तन्त्र संहिता) मन्त्रं तन्त्रमादयः प्रयोगाः अस्य शब्दस्य व्यापक परिवेशसीमां व्यक्तं करोति। आयुर्वेदशास्त्रमपि शल्यं, शालाक्यं, पाचनं, तथा उपचारैः सह तन्त्रस्य प्रायोगिक महत्वमुपरि प्रकाशं ददाति। शासनपद्धतिषु राजतन्त्र, प्रजातन्त्रं लोकतन्त्रमादयः प्रयोगाः अस्य प्रशासनिक कार्यकलापानामुपरि सर्वेषां ध्यानमाकर्षितं करोति। संगीतशास्त्रेऽपि स्वरतन्त्रं विविधरसधाराणां सरण्याः निरूपणं तन्त्रशास्त्रं करोति। तन्त्रः तथा आगमः पर्यायवाची शब्दाः मन्यन्ते। समस्त शिववक्त्र समुद्भूतशास्त्रं आगममस्ति। अतः ते तन्त्रमपि सन्ति। तन्त्र शब्दः एकः तथ्यपरकस्वात्मचित्फलकोपरि प्रतिबिम्बितचित्रस्य प्रतीकोऽस्ति। अनया दृष्ट्या तन्त्रः एकः दर्शनः भवति। दर्शनमपि वैचारिकः बौद्धिकभूमि न अपि तु स्वात्मचैतन्यात्मकानुभूतेः 'सत्' पक्षस्य स्वरूपस्य दर्शनमिति।

श्रीमद्देवीभागवतः सर्वोत्तमं पावनपुराणं मन्यते, अस्मिन् पुराणे अष्टादशसहस्रात्मकाः श्लोकाः वर्तन्ते। संस्कृतभाषायामस्य रचना जाता।

प्रथमस्कन्धे एकत्र तन्त्रस्य प्रभाव दृश्यते तत्प्रसंगस्य वर्णनं विधीयते----

एकस्मिन् समये भगवान् विष्णुः युद्धं कर्तु सन् अधिक श्रमयुक्तो जातः तदनन्तरं वैकुण्ठे गत्वा विष्णुः पद्मासने स्थित्वा अतिष्ठिपत्। घोरनिद्र वशीभूत्वा विष्णुः सुप्तः। सर्वेदेवाः वैकुण्ठे गत्वा विष्णोः दर्शनं विधाय निद्रावशीभूतो दृष्ट्वा चिन्तिताः। इन्द्रः कथितः सम्प्रति किं कर्तव्यम् तत्क्षणमेव शिवोवाच भो देवाः यद्यपि शास्त्राणामादेशः यत् निद्रावशीभूते जने जागरणं न कर्तव्यम् परन्तु सम्प्रति भवताभावश्यकता विद्यते अतः जागरिव्यमिति। तदा ब्रह्मा वम्री नामकमेकं क्रीडा उत्पन्नं कृता सा क्रीडा धनुषोपरि आरुह्य तस्य प्रत्यञ्चामच्छिनत् , तदनन्तरं भगवते विष्णोः शिरः कुत्र गतः इति ज्ञानं तत्रोपास्थिताः देवाः न दृष्टा सर्वे देवाः सनातनमयी विद्यास्वरूपिणी महामायाः चिन्तनं कर्तुमारब्धाः। ततः ब्रह्मा वेदानादिष्टः, ब्रह्मविद्यास्वरूपिणी भगवती जगदम्बिका परमाराध्या सन्ति अतः तां स्तुतिः कुरुत। सा महामाया

सम्पूर्णकर्माणा सिद्धिदात्री अतः वेदाः स्तुतिं कर्तमारब्धवान्।

## वेदा उचुः

नमो देवि महामाये विश्वोत्पत्ति करे शिवे ।
निर्गुणे सर्वभूतेशि मातः शंकर कामदे ।।०।।
त्वं भूमिः सर्वभूतानां प्राणः प्राणवतां तथा ।
धीः श्रीः कान्तिः क्षमा शान्तिः श्रद्धा मेधा धृतिः स्मृतिः ।।०।।
त्वमुद्गीथेऽर्धमात्राऽसि गायत्री व्याहृतिस्तथा ।
जया च विजयाधात्री लज्जा कीर्तिः स्पृहा दया ।।०।।

त्वां सस्तुमोऽम्ब भुवनत्रयसंविधान
दक्षां दयारसयुतां जननीं जनानाम् ।
विद्यां शिवां सकललोक हितां वरेण्यां
बाग्बीजवास निपुणां भवनाशकर्त्रीम् ।।०।।
ब्रह्मा हरः शौरिसहस्रनेत्र
वाठवह्निसूर्या भुवनाधिनाथाः ।
ते त्वत्कृताः संति ततो न मुख्या
माता यतस्त्वं स्थिरजंगमानाम् ।।०।।
सकलभुवनमेतत्कुर्तकामा यदा त्वं
सृजसि जननि देवान्विष्णुरुद्राज मुख्यान् ।
स्थितिलय जननं तैः कारयस्येकरूपा
न खलु तव कथं चिद्देवि संसारलेशः ।।०।।

---

१- श्रीमद्देवीभागवत स्क०१ अ०५ श्लोक सं० ५३-५८ पर्यन्तम् ।

अनेन प्रकारेण शेष नव श्लोकाः स्तुतिकृते विद्यन्ते विस्तरभायादत्र न लिखामि। एभ्यः श्लोकेभ्य इदमायाति यत् तान्त्रिकदृष्ट्या इमें श्लोकाः वर्तन्ते, इयं स्तुतिरपि अतीव महत्वपूर्णा विद्यते। वेदाः यां भगवतीं स्तुतिं कृताः। तदा भगवती प्रसन्ना जाता देवान् प्रति उवाच भो देवाः शान्तचित्तो भूत्वा स्व स्व स्थानं गम्यताम्। वेदाः मम स्तुतिः कृताः, अतः मर्त्यलोके इमां स्तुतिं पठिष्यति पठति वा सर्वं प्राप्स्यति। अतः इयं स्तुतिः तान्त्रिकदृष्ट्या अतीव महत्वपूर्णा विद्यते।

प्रथमस्कन्धस्य षष्ठोऽध्याये भगवान् विष्णुः योग निद्राया अधीनो भूत्वा शेषशय्यायामुपरि शेते। मधुकैटमद्योः राक्षसयोः भयभीतो भूत्वा ब्रह्मा विष्णोः सुन्दरैः शब्दैः-- सम्बोधितैः स्तवनं प्रम्भं कृतवान्----

**देवित्वमस्य जगतः किल कारणं हि**
**ज्ञातं मया सकलदेव वचोभिरम्ब ।**
**यद्विष्णुरप्यखिललोक विवेककर्ता**
**निद्रावशं च शयितः पुरुषोत्तमोऽद्य ।।०।।**
**को वेद ते जननि मोहविलासलीलां**
**मूढोऽस्म्यहं हरिरयं विवशश्च शेते ।**
**ईहत्तया सकलभूतमनो निवासे**
**विद्वत्तमो विवुधकोटिषु निर्गुणायाः ।।०।।**

---

१- श्रीमद्देवीभागवत स्क०१ अ०७ श्लोक सं० २७-२८ ।

एवं प्रकारेण स्तुतेः बहवः श्लोकाः वर्तन्ते परन्तु अधिकं न लिखितम्। ब्रह्मणः स्तुतिं करणेसति भगवती निद्रा विष्णोः पार्श्वे स्थिता जाता विष्णोः निद्रा समाप्ता तदा ब्रह्मा विष्णोः परिक्रमा कर्तुमारब्धा। तदनन्तरमेकं विचारणीयो विषयः यत् यः विष्णुः जगत् स्वामी, जगतगुरुः, परमानन्दस्वरूपः तथा सर्वेषां सृष्टिः कुर्वन्ति, सर्वेषां संरक्षणं कुर्वन्ति स सर्वगुण सम्पन्नो भगवान् विष्णुः विवशो भूत्वा गाढया निद्रया कथं सुप्तः। यद्यपि अयं प्रश्नः गहनः विचारणीयश्च विद्यते। महामुनि सूतः उवाच भो ऋषयः! येनेदं चराचर जगतुत्पन्नोऽभूत् तथा वेदेषु कथितमसित यदयं विष्णुः सर्वान्तर्यामी, सर्वेषां रक्षकः सन्तीति। अतः वैदिका सिद्धान्तानुयायिनः परमप्रभुभगवान नारायणस्य चरणकमलेषु प्रणिपत्योपासनां कुर्वन्तीति। केचन शिवस्योपासकाः सन्ति, वेदेषुः शिव अपि अनेक नाम्ना विख्यातो वर्तते। यथा महादेवः, शिवः, शशिशेखरः, त्रिनेत्रम् पञ्चवक्त्रवम् , शूलपाणिः वृषभध्वजः, त्र्यम्बकः, कपर्दी, गौरीदेहार्धधारी, आदिनाम्ना विख्याताः। अनेनैव प्रकारेण महर्षीणां कथनमस्ति यत् एक एव भगवान् विष्णुः सम्पूर्णदेवेषु विराजमानः वर्तते।

प्रत्यक्षानुमानशब्दाश्च एषां त्रयाणां प्रमाणानि प्रकाण्ड पण्डिता सिद्धं कृताः। नैयायिकानां सिद्धान्ते उपमानमप्येकं

प्रमाणं मन्यते, मीमांसकाः अर्थापत्तिं पञ्चमं प्रमाणं मन्यन्ते, पुराणवेत्ताः विज्ञः पुरुषाः सप्तमं प्रमाणमपि मन्यते। यः सर्वेषु प्रमाणैः न ज्ञातुं शक्यते सैव परब्रह्म परमात्मा अस्ति। सैवः विष्णुः सर्वेषु देवेषु विराजमानाः सन्ति। विद्वान् पुरुषाः कथयन्ति यत् ब्रह्मण्येव सृष्टि सृष्टिकरणस्य शक्तिरस्ति, विष्णुः पालनकरणे समर्थः, शिवः संहारकरणे कुशलो विद्यते। सूर्यः, विश्वं प्रकाशयति, शेषनागः, कच्छपः पृथ्वीं धारयतः। अग्नौ दाहकता शक्तिः, पवने प्रेरणात्मिका शक्तिः, सर्वेषु या शक्तिः विराजमान वर्तते सैवाद्याशक्तिः। तस्याः प्रभावेण शिवमपि शिवतां प्राप्नोति। येषामुपरि तस्याः शक्तेः प्रभावं न भवति स शक्तिहीनो भवति। सर्वेषु व्यापकरूपेण या शक्तिः विराजमाना वर्तते सैव 'ब्रह्म' इति नाम्ना निरूपिता। अतः विद्वज्जनैः कर्तव्यमिदं यत् विचारं कृत्वा सदैव तस्याः शक्ते उपासनां अस्ति। तान्त्रिकदृष्ट्या उपासना करणेन सर्वं कार्यं सरलतया सम्पन्नं भवति। विष्णोः सात्त्विकी शक्तिः व्याप्ता, यदि स शक्तिः विष्णोः पृथग् भवेत् तदा विष्णुः किञ्चिदपिकार्यं करणेऽसमर्थो भविष्यन्ति। ब्रह्मणि राजसी शक्तिः विद्यते। तां विना सृष्टि करणेऽसमर्थो भविष्यति, शिवे तामसी शक्तिः विद्यते यया शक्तया एव संहारकरणे समर्थो भवति। उपर्युक्त कथनस्य तात्पर्यमिदं यत् प्रथमस्कन्धे तन्त्रस्य प्रभावः सर्वाङ्गरूपेण विद्यते। अग्रे द्वितीय स्कन्धे कुत्र

तन्त्रस्य प्रभावः इदमन्वेषणमावश्यकमस्ति अत अन्वेषणं कृत्वा सप्रसंगं तन्त्रस्य चर्चा कर्तुं शक्नुयादिति।

श्रीमद्देवीभागवतस्य द्वितीयस्कन्धस्य सप्तमोऽध्याये महाराजयुधिष्ठिरः गङ्गायास्तटे भ्रमन सन् विदुरमपश्यत् ,ततः विदुरं प्रणामं कृत्वा तस्मिन् सम्मुखे तस्थौ ततः विदुरस्य शरीरात् निसृतं तेजः युधिष्ठिर मुखे लीनं जातम्। अनेन प्रकारेण विदुरस्य पाञ्चभौतिकं शरीरं शान्तो जातः। तस्मिन्समये युधिष्ठिरः शोकीभूय मृतशरीरं दग्धार्थमुद्यमं कृतवान् तत्क्षणमेव आकाशवाणी वभूव, भो राजन् विदुरः परम त्यागी पुरुष आसीत् अतः दाहं कर्तुं नोचितं विद्यते। भूपते! यथेष्टं गच्छ। आकाशवाणीं श्रुत्वा सर्वे भ्रातरः अमले गङ्गाजले सस्नुः तदन्तरं धृतराष्ट्रस्य पार्श्वे गत्वा विस्तारपूर्वकं तत् विषयमुचुः। तस्मिन् समये धृतराष्ट्रस्य आश्रमे सर्वे पाण्डवाः नागरिकाः, विद्यमानाः आसन्। सत्यवती नन्दनो व्यासः तथा नारदः तत्र युधिष्ठिरात् मिलनार्थमागतौ। ततः कुन्ती उवाच भो व्यास! अहं जन्मसमये एव कर्णमदृष्टम् , हे तपोधन! मे मनः तप्यते अतः कर्णं दर्शयस्व। ततः गान्धारी अप्युवाच यत् दुर्योधनः रणेऽगच्छत् मया न वीक्षितः मुने! त्वं समर्थोऽसि अतः मम पुत्रान् दर्शयस्व,। सुभद्रा अपि प्रोवाच यत् अभिमन्युं महावीरं प्राणादप्यधिकं प्रियं त्वं मे पुत्रं दर्शय इति। सत्यवती

सुतो व्यास एवं विधानि वाक्यानि श्रुत्वा ततः प्राणायामं कृत्वा सनातनीं भगवतीं जगदम्बायाः दध्यौ। सायं समयमासीत् गंगायास्तटे मुनिव्यासः युधिष्ठिरप्रभृतीन् सर्वान् समाहूय भागीरथ्यां स्नानं कृत्वा ते सर्वे जगज्जननीं दुर्गादिव्याः तुष्टाव।

## स्तुतिः

प्रकृतिं पुरुषारामां सगुणां निर्गुणां तथा ।
देवदेवीं ब्रह्मरूपां मणिद्वीपाधिवासिनीम् ।।०।।

यदा न वेधा न च विष्णुरीश्वरो
न वासवो नैव जलाधिपस्तथा ।
न वित्तयो नैव यमश्च पावक
स्तदाऽसि देवि त्वमहं नमामि ताम् ।।०।।
जलं न वायुर्न धरा न चाम्बरं
गुणा न तेषां च न चेन्द्रियाण्यहम्
मनो न बुद्धिर्न च तिग्मगुः शशी
तदाऽसि देवि त्वमहं नमामि ताम् ।।०।।

प्रार्थयत्येष मां लोको मृतानां दर्शनं पुनः ।
नाहं क्षमोऽस्मि मातस्त्वं दर्शयासु जनान्मृतान्[१] ।।०।।

१- देवीभागवत स्कन्ध २ अ०७ श्लोक सं० ६०-६२ ।

तदनन्तरं सा महामायाभुवनेश्वरी सर्वान् पार्थिवान् स्वर्गादाहूय दर्शयामास।

दृष्ट्वा कुन्ती च गान्धारी सुभद्र च विराज्जा ।
पाण्डवा सुमुदुः सर्वे वीक्ष्य प्रत्यागतान् स्वकान् ।।०।।
पुनर्विसर्जितास्तेन व्यासेनामित तेजसा ।
स्मृत्वादेवीं महामायामिद्रजालमिवोद्यतम् ।।०।।
तदा दृष्ट्वा ययुः सर्वे पाण्डवा मुनयस्तथा ।
राजा नागपुरं प्रातः कुर्वन् व्यासकथां पथि ।।०।।

उपर्युक्त विषयाध्ययनेनेदमायाति यत् तन्त्रस्य केन प्रकारेण प्रभावो जायते। उपर्युक्त विषये महामायाभुवनेश्वरी प्रभाव विद्यते येन प्रभावेन मृतानां दर्शनं सुगमतया जातम्। भुवनेश्वरी देवी शक्तिरस्ति। तन्त्रागमे शक्तिविषये बहुविचाराः विस्तृतरूपेण विद्यन्ते।

स्वतन्त्रं भगवती तन्त्रं विद्यते। ततः पशुपतिर्जगदम्बानुरोधेनाखिल पुरुषार्थ सङ्घटनात्मकमेक मात्रं महाशक्ति प्रतिपादकं तन्त्रं पृथिव्यामवतारयदिति कथितमस्ति। एतत् कादिमताख्यं तन्त्रमन्यतन्त्रेभ्यो निरपेक्षं स्वतन्त्रं तन्त्रमस्त्यतस्तदनादितन्त्ररूपे

१- श्रीमद्देवीभागवत स्क०२ अ०७ श्लोक ६६-६८ ।

गणितम्। एतत्तन्त्रविषये शङ्करार्यरचितायां सौन्दर्यलहर्यामुच्यते यत्----

**चतुः षष्ठया तन्त्रैः सकलमनुसन्धाय भुवनं**
**स्थितस्तत्तत्सिद्धि प्रसभपरतन्त्रं पशुपतिः ।**
**पुनस्तान्निर्बन्धादखिलपुरुषार्थैक घटना**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिमा[1] ।।०।।**

भगवत्याः सर्वसिद्धिदयन्त्राणि सर्वतन्त्रेभ्यः स्वतन्त्राः सन्ति।

श्रीमद्देवीभागवतस्य तृतीयस्कन्धे वर्तते यत् ब्रह्मा विष्णुः महेश्वरः एते त्रयो देवाः आकाशे विचरन् सन् एकस्मिद्वीपे गतवन्तः तत्र दिव्य पाशङ्कुश अभय वरमुद्राभिः युक्ता भगवती भुवनेश्वरी विराजमाना आसीत्। तां दृष्ट्वा इमे देवाः विचारिताः यत् इयं सुन्दरी का। अस्याः नाम का, आसां विषये अनभिज्ञाः वयम्। आसां सहस्राणि कराणि, सहस्राणि नेत्राणि, अतः इयं का ततः विष्णुः तांमवलोक्य निश्चयं कृतं यत् चारुहासिनी भगवती जगदम्बिका सन्ति। महाविद्या, महामाया आसां नमानि, एषाः पूर्णप्रकृतिः, एषा कदापि नाशो न भवति।

---

१- सौन्दर्यलहर्या श्लोक सं० ३१ ।

एषा भगवती देवी सर्वेषां कारणं हि नः ।
महाविद्या महामाया पूर्णा प्रकृतिरव्यया ।।०।।
दुर्ज्ञेयाऽल्पधियां देवी योगगम्या दुराशया ।
इच्छा परात्मनः कामं नित्या नित्य स्वरूपिणी ।।०।।
दुराराध्याऽल्पभाग्यैश्च देवी विश्वेश्वरी शिवा ।
वेदगर्भा विशालाक्षी सर्वेषामादिरीश्वरी ।।०।।
एषा संहृत्य सकलं विश्वं क्रीडति संक्षये ।
लिंगानि सर्वजीवानां स्वशरीरे निवेश्य च ।।०।।
सर्वबीजमयी ह्येषा राजते साम्प्रतं सुरौ ।
विभूतयः स्थिताः पार्श्वे पश्यतां कोटिशः क्रमात् ।।०।।
दिव्याभरणभूषाढयां दिव्यगन्धानुलेपनाः ।
परिचर्याः पराः सर्वा पश्यतां ब्रह्मशंकरौ[1] ।।०।।

अनेन प्रकारेण ते देवाः भगवत्याः दर्शनं कृत्वा धन्य-धन्याः जाताः। वयं पुराकाले यत् तदः तप्तं तस्येदमुत्तमं फलं प्राप्तम्। अन्यथा भगवत्याः दर्शनमतिदुष्करमासीत्। अनेनेदं निश्चितं यत् भूलप्रकृतिः भगवती श्रीमद्देवीभागवते तन्त्ररूपेण विराजमाना आसीत्। कथनस्येदं तात्पर्यमिदं प्रतिभाति यत् तृतीयस्कन्धमपि तन्त्रेण युक्तामस्ति, तत्र किं तन्त्रं भगवती तन्त्रमिति।

१- श्रीमद्देवीभागवत स्क०३ अ०३ श्लोक ५१-५६ ।

तृतीयस्कन्धस्य चतुर्थोऽध्याये भगवान् विष्णुः एकदा देवीं श्रीभुवनेश्वरीं महादेवीमवलोक्य तुष्टाव।

प्रकृति देवीं तां भुवनेश्वरीं नमस्करोमि, या कल्याणस्वरूपिणी अस्ति, मनोरथ प्रदात्री, वृद्धि एवं सिद्धिस्वरूपा वर्तते, तां भगवतीं भूयोभूयः नमोनमः। यस्य सच्चिदानन्दमय विग्रहः, यः संसारस्योत्पत्ति स्थानः, तथा या सृष्टिः, स्थितिः, संहारः, अनुग्रहः एवं तिरोभावरूपं एषां पञ्चकृत्यानां विधानं करोति तां भगवती भुवनेश्वरीं नमो नमः।

**ज्ञातं मयाऽखिलमिदं त्वयि सन्निविष्टं**
**त्वत्तोऽस्य संभवलयावपि मातुरद्य ।**
**शक्तिश्च तेऽस्य करणे विततप्रभावा**
**ज्ञाताऽधुना सकललोकमयीति नूनम् ।।०।।**
**विस्तार्य सर्वमखिलं सदसद्विकारं**
**संदर्शयस्य विकलं पुरुषाय काले ।**
**तत्वैश्च षोडभिरेव च सप्तभिश्च**
**भासीद्रजालमिवः नः किल रंजनाय ।।०।।**
**नत्वामृते किमपि वस्तुगतं विभाति**
**व्याप्यैव सर्वमखिलं त्वमवस्थिताऽसि**
**शक्तिं विना व्यवहृतौ पुरुषोऽयशक्तो**
**बंभण्यते जननि बुद्धिमता जनेन[1] ।।०।।**

१- श्रीमद्देवीभागवत स्क०३ अ०४ श्लोक ३०-३२ ।

प्रीणसि विश्वमखिलं सततं प्रभावैः
स्वैस्तेजसा च सकलं प्रटी करोषि ।
अत्स्येव देवि तरसा किल कल्पकाले
को वेद देवि चरितं तव वै भवस्य[1] ।।०।।

अनेन प्रकारेण त्रयोविंशति श्लोकाः विष्णोः स्तुतेः वर्तन्ते तेष्वत्र चत्वारी श्लोका लिखिताः अन्ये अतिविस्तरभयात् न लिखितम्। तदनन्तरं देवाधिदेवः महादेवोऽपि स्तुतिं प्रारम्भं कृतवान् तस्या स्तुतेः केचन श्लोका अत्र दीयते----

यदि हरिस्तव देवि विभावज
स्तदनु पद्मजएव तवोद्भवः ।
किमहमत्र तवापि न सद्गुणः
सकललोकविधौ चतुरा शिवे ।।०।।
त्वमसि भूः सलिलं पवनस्तथा
खमपि वह्निगुणश्च तथा पुनः ।
जननि तानि पुनः करणानि च
त्वमसि बुद्धिमनोऽप्यथ हंकृतिः[2] ।।०।।

अनेन प्रकारेण शिवः भगवतीं जगदम्बां स्तुतिं कृत्वा प्रोवाच भो देवि! दयां कृत्वा महयं पवित्र नवार्णमन्त्रस्योपदेशं

---

१- श्रीमद्देवीभागवत स्क०३ अ०४ श्लोक ३३ ।

२- श्रीमद्देवीभागवत स्क०३ अ०५ श्लोक २,३ ।

देहि येन सर्वोत्तम मन्त्रस्य जपं कृत्वाऽहं सुखी भवाम। शिवस्य स्तुतिं श्रुत्वा भगवतीजगदम्बा प्रसन्नो भूत्वा नवार्णमन्त्रस्य स्पष्टमुच्चारणं प्रस्फुटम्। देवाधिदेवो महादेवः नवार्णमन्त्रं श्रुत्वा परां मुदमवाप। शिवः देव्याः चरणौ प्राणम्य तत्रैवारस्थितः। कामदं मोक्षदं तस्य नवार्णमन्त्रस्य शिवः जपमारब्धं कृतवान्। ब्रह्मा उवाच यत् शिवं जपं कर्तु सन् पश्यन् अहं तां महामायां पदांतिके संस्थितमवोचम्। माता त्वं मखिलजगदस्य सृष्टिकर्त्री शुद्धस्वरूपा वर्तते। वेदाः त्वामेवं रूपं कल्पनाकर्तुमसमर्था अकुशलाश्च वर्तन्ते परन्त्विदं न ते वेदाः साधारणकार्ये तव प्रयोगं कर्तुं नेच्छन्ति। समस्तयज्ञेषु तव स्वाहा नाम्नः उच्चारणं भवत्येव। ब्रह्मा अपि स्तुतिं कृत्वा अति प्रसन्नोबभूव। तदनन्तरं ब्रह्मा पुनः उवाच भो देवि! ''एकमेवाद्वितीयं ब्रह्म'' इति वेद वाक्यस्य कोऽभिप्रायः इति वर्णय, त्वं स्त्री अथवा पुरुष असि इदमपि रहस्यं विशदरूपेण मह्यं कथय। ततः भगवती जगदम्बा स्वं स्वरूपस्य वर्णनं क्रियते----

**सदैकत्वं न भेदोऽस्ति सर्वदैव ममास्य च ।**
**योऽसौ साहमहं योसौ भेदोऽस्ति मति विभ्रमात्[१] ।।०।।**

---

१- श्रीमद्देवीभागवत स्क०३ अ६ श्लोक २ ।

आवयोरन्तरं सूक्ष्मं यो वेद मतिमान्हि सः
विमुक्तः स तु संसारान्मुच्यते नात्र संशयः ।।०।।
एकमेवा द्वितीयं वै ब्रह्म नित्यं सनातनम् ।
द्वैतभावं पुनर्याति काल उत्पित्सु संज्ञके[१] ।।०।।

अनेन प्रकारेण तृतीयस्कन्धे बहवः विषयाः जगदम्बिकायाः सम्बन्धे तन्त्रानुगतं विद्यते परन्त्वत्रैव विरम्यते। अग्रे चतुर्थस्कन्धस्य ये विषयाः तान् समीक्ष्यते तन्त्रानुसारेण।

चतुर्थस्कन्धस्य विंशत्यध्याये देव्याः महिमा वर्णनं विद्यते तस्मिन्वर्णने तन्त्रास्य प्रभावः दृष्टिगोचरी भवति। अमिततेजस्वी भगवान् विष्णुः यदुकुले प्रकटितमभूत्। तत्र प्राकट्ये द्वौ कारणौ आस्ताम्। प्रथमः मुनिवरभृगोः शापः तथा योगमायायाः प्रबलेच्छा। अस्माकं हृदि त्विदं विचरमायाति यत् योगमायाया इच्छेव प्रधानरूपेण विद्यते, पृथिव्याभारं दूरं कर्तुं तु निमित्तमात्रमासीत्। योगमायायाः विधानं मत्वा भगवान् विष्णुः धरातलोपरि प्रकटितमभूत्।

---

१- श्रीमद्देवीभागवत स्क०३ अ०६ श्लोक ३,४ ।

व्यातः जनमेजयनामकराजानं प्रति उच्यते यत् भो राजन्! अहं मम इति सुदृढेन पाशेन न वद्धवा मुक्तिकामा मुमुक्षवो योगिनः देवीं विश्वेश्वरी शिवां समुपासन्ते, ''तद्भक्तिलेशलेशांशंलेशलेशलवांशकम्'' प्राप्य भक्तः मुक्तिः प्राप्यते। एषां भगवतीं कः जनः यः न सेवेत। कस्यचिदपि ब्यक्तेः मनसि इय माकांक्षा जागर्ति यत् ''भुवनेशिमांपाहि'' भक्तस्य मुखारविन्दात् भुवनेशि इति शब्दोच्चारणेनैव भगवती जगदम्बा त्रैलोक्य वैभवं प्रदानं करोति, अग्रे ''मां पाहि'' इत्यस्य वचसः देयाभावात् स्व उपरि भक्तस्य ऋणं स्वीकरोति। भो पार्थिव! विद्या, अविद्या इत्युभौ रूपौ भगवत्याः स्तः। विद्यया जन्तुः मुच्यते अविद्यया वध्यते। ब्रह्मा विष्णुः शिवः एते सर्वे देवाः तस्याः देव्याः वशानुगाः सन्ति। अतः देव्याः विषये चतुर्थस्कन्धे ये विषयाः सन्ति ते सर्वे तन्त्रेण प्रभावाः सन्तीतिसंक्षेप।

पञ्चम स्कन्धस्य एकविंशतिद्वाविंशत्यध्याये व्यासः प्रोवाच यत् यदा देवाः भगवत्याः स्तुतिं कृता तदा भगवती जगदम्बा करुणया ओतप्रोतो भूत्वा तत्क्षणमेव प्रकटितावभूव। तस्याः रूपं अतीव मनोहरं दृश्यते। तस्याः वस्त्राणि विचित्राणि आसन्। तस्मिन्नेव समये भगवती अम्बा प्रहस्य देवान् प्रतिगम्भीरवाण्यामवोचत्। भो देवाः यूयम् कथं ममविशेषरूपेण

स्तुतिं क्रियन्ते युष्माकमाननानि कथं म्लानतां गतानि अतः स्व कार्य मत्समक्षे प्रकटी कुरु।

जगतनियन्त्रकर्त्रीकरुणमयीमूर्ति भगवती जगदम्बे! तव शरणे आगत्य स्तुतिं कुर्मः अतः अस्मभ्यं यत् संकटमस्ति तत् दूरी कुरु। ममसंकटमिदं यत् सम्प्रति शुम्भ निशुम्भ दानवौ अतिभयंकरौ स्तः। तौ दानवेभ्यः अस्माकं रक्षां कुरु हेतो वयं समागताः तव पार्श्वे। इदं सर्वं श्रुत्वा भगवती जगदम्बा स्व विग्रहाद् एको द्वितीयः रूपः प्रकटी कृतः स रूपः साकाररूपेण आसीत्। अतः समस्तजगतः तां भगवतीं कौशिकी नाम्ना उच्यमानाः। सा कौशिकी भगवत्याः पार्वत्याः शरीरात् निष्क्रान्ता येन कारणेन भवगतीपार्वती शरीरः कृष्णरूपा सञ्जाता तदनन्तरं सा भगवती कालिकानाम्ना जाता।

**मपीवर्णा महाघोरा दैत्यानां भयवर्धिनी ।**
**कालरात्रीति सा प्रोक्ता सर्वकामफलप्रदा[1] ।।०।।**

कालिकायाः रूपं दृष्ट्वा सर्वे आश्चर्यचकिता जाताः यद्यपि सा भगवती कालिका भक्तानां सम्पूर्णान् मनोरथान् प्रदात्री

१- श्रीम०दे०भा० ५, २३, ४।

तस्या स्वाभाविकं गुणमासीत्। सा कालरात्रीनाम्ना प्रसिद्धा जाता। तस्याः कालरात्रेः यदा पूजा भवति सा पूजा तन्त्रयुक्ता भवति। भगवती जगदम्बा प्रहस्य उवाच सर्वेदेवाः निर्भयं भूत्वा स्वस्थाने विराजमानो भवत। सम्प्रत्यहं शत्रूणां संहारं करिष्यामि। सा कौशिकीदेवी सिंहोपरि आरुह्य तां कालीं सहौव गमनाय आदेशं प्रदत्ता। तदनन्तरं राक्षसानां मध्ये देव्या अतिघोरं युद्धमभूत् , तस्मिन्युद्धे सर्वेषां राक्षसानां देवी द्वारा वधं जातम्। तदा सर्वे देवाः प्रसन्नोभूत्वा देव्या कौशिकीं कालिकां च स्तुतिमारब्धं कृतवन्तः। सा स्तुतिरपि तन्त्रस्य एकभागमस्ति यया स्तुत्या मानव५ सर्वं कार्यं सम्पन्नं कर्तुं शक्यते। पञ्चमस्कन्धस्य द्वात्रिंशत् त्रयस्त्रिंशदध्याये सुमेधा ऋषिद्वारा देव्याः महिमायाः वर्णनं विद्यते, तस्याः महिमायाः वर्णनं श्लोकेन क्रियते।

## भगवत्याः महिमायाः वर्णनम्

**नित्यैव सा परादेवी कारणानां च कारणम् ।**
**वर्तते सर्वभूतेषु शक्तिः सर्वात्मना नृप ।।०।।**
**अविर्भावतिरोभावौ देवानां कार्यसिद्धये ।**
**यदा स्तुवन्ति तां देवाः मनुजाश्च विशांपते[1] ।।०।।**

१- श्रीमद्देवीभागवत स्क०५ अ०३३ श्लोक ५५-५६ ।

प्रादुर्भवतिभूतानां दुःखनाशाय चाम्बिका ।
नानारूपधरा देवी नानाशक्तिसमन्विता ।।०।।
अविर्भवति कार्यार्थं स्वेच्छया परमेश्वरी ।
दैवाधीना न सा देवी यथा सर्वे सुरा नृप ।।०।।
न कालवशागानित्यं पुरुषार्थ प्रवर्त्तिनी ।
अकर्ता पुरुषो द्रष्टा दृश्यं सर्वमिदं जगत् ।।०।।
दृश्यस्य जननी सैव देवी सद सदात्मिका ।
पुरुषं रंजयत्येका कृत्वा ब्रह्माण्ड नाटकम् ।।०।।
रंजिते पुरुषे सर्वं सहंरत्यतिरंहसा ।
तथा निमित्त भूतास्ते ब्रह्मविष्णुमहेश्वराः ।।०।।
कल्पिता स्वस्व कार्येषु प्रेरिता लीलया त्वमी ।
स्वांशं तेषु समारोप्य कृतास्ते बलवत्तरा ।।०।।
दत्ताश्च शक्तयस्तेभ्यो गीर्लक्ष्मी गिरिजा तथा ।
ते तां ध्यायान्ति देवेशाः पूजयन्ति परां मुदा ।।०।।
ज्ञात्वा सर्वेश्वरीं शक्तिं सृष्टिस्थिति विनाशिनीम् ।
एतत्ते सर्वमाख्यातं देवीमाहात्म्य मुत्तमम्[१] ।।०।।

उपर्युक्त स्तुतिः तन्त्रदृष्ट्या अतीवमहत्वपूर्णा विद्यते अतः यः मानवः इयं स्तुति प्रतिदिनं करोति तत्कृते किमपि अलभ्यं नास्ति सर्वं सुलभं भविष्यति।

---

१- श्रीमद्देवीभागवत स्क०५ अ०३३ श्लोक ५७-६५ ।

श्रीमद्देवीभागवतस्या अष्टमस्कन्धस्य चतुर्विंशत्यध्याये देव्या उपासनायाः प्रसङ्गस्य वर्णनं विद्यते। सा उपासना तान्त्रिकी अस्ति तस्या उपासनायाः मानवः सर्वसिद्धिं प्राप्नोति। उपासनायाः किं स्वरूपमस्ति तस्याः वर्णनं संक्षेपेणैव करिष्ये।

एकस्मिन्समये नारदः भगवान् नारायणेनापृच्छत् , देव्याराधनलक्षणः कीदृशः, कथमाराधिता देवी इति सर्वं सुस्पष्टं कथय----

देवर्षिनारद! एकाग्रचिन्तं कृत्वा श्रृणु। अयं संसार अनादिरस्ति, अस्मिन्संसारे आगत्य यः भगवती जगदम्बाया आराधना (उपासना) करोति सः घोरघोरतरसंकटात मुक्तो भवती, ताा सर्वशक्तिमयी भगवती स्वयं तस्य रक्षाकरणार्थं संलग्ना भवति। अग्रे पूजायाः विधानमेवमस्ति----

१- प्रतिपदायां तिथौ भगवती जगदम्बायाः गोघृतेन पूजा भवितव्यम् , तदनन्तरं षोडशोपचारेण पूजनं कृत्वा गोघृतेन नैवेधं कर्तव्यम् , तं नैवेधं (घृतं) ब्राह्मणं दद्यात्। तस्य फलं मनुष्यः दीर्घायुः भवति।

२- तृतीयां तिथौ दुग्धेन प्रपूजयेत् तं दुग्धं द्विजाग्रयाय दत्वा सर्वदुःखातिगो भवेत्।

४- चतुर्थ्यां तिथौ पूपाय पूजयेत् ततः द्विजाय दातव्यम तस्य फलं विघ्नाः दूरी भवन्ति।

५- पञ्चम्यां तिथौ कदलीफलेन पूजनं कृत्वा ततः तं फलं ब्राह्मणमर्पयेत् तस्य फलं पुरुषस्य बुद्धेः विकासं भवति।

६- षष्ठी तिथौ देव्याः पूजने मधोः महत्वमस्ति अतः मधुना देवीं पूजयेत् तं मधुं विप्रमर्पयेत् येन प्रभावेण साधको मनुष्य मनोहरं रूपं प्राप्तं करोति।

७- सप्तमी तिथौ पूजने गुडस्य विधानमस्ति देवीं गुडमर्पयित्वा ततः ब्राह्मणं दातव्यं यस्य फलं मनुष्यः शोकमुक्तो भवति।

८- अष्टम्यां तिथौ देव्यै नारिकेलस्य नैवेद्यमर्पयेत्। तं नारिकेलं ब्राह्मणाय प्रदातव्यम् तस्य फलं नरः तापहीनो भवति।

९- नवम्यां तिथौ धान्ययस्य लाजां नैवेधं कर्तव्यम् तां लाजां ब्रह्मणाय दातव्यम् येन मनुष्य इहलोके परलोके च सुखी भवेत्।

१०- दशम्यां तिथौ कृष्णतिलान् देवीं प्रपूजयेत् तं तिलं ब्राह्मणाय प्रदत्वा यमलोकानां भयेनमुक्तो भवति।

११- एकदश्यां तिथौ देव्यै यः दधि अर्पयते ततः तं दधिं ब्राह्मणं ददाति, सः मानवः देव्या प्रियतभोगवति।

१२- द्वादश्यां तिथौ यः पृथुकानां (चिउड़ा) भोगमर्पयेत् ततः ब्राह्मणं प्रददेत् सः पुरुषः भगवत्याः प्रेमभाजनं भवति।

१३- त्रयोदश्यां तिथौ यः चणकस्य भोगं देव्यै अर्पणं कृत्वा विप्रं ददाति स पुरुषः संतानवान् भवति।

१४- चतुर्दश्यां तिथौ यः पुरुषः दैव्यै सक्तून अयच्छति तानेव विप्रायदद्यात् सः शिवस्य दयितो भवेत्।

१५- पूर्णिमायां तिथौ यः जगदम्बां पायसं (खीर) प्रयच्छति तं पायसं श्रेष्ठ ब्राह्मणं ददाति स अखिलान् पितृनुद्धरेत्। पूर्णिमाया अमावास्याः तिथौ पूजायां किञ्चिदप्यन्तरं नास्ति, देव्यः प्रसन्नतायै हवनस्यापि विधानं विहितमस्ति यस्यां तिथौ यः वस्तु नैवेद्याय वर्तते तस्य वस्तोः तासु तासु तिथिषु हवनं कर्तव्यम्। इदमहवनं अखिलानामरिष्टानां नाशं करोति। अग्रे दिनस्य पूजायाः विधिः वर्तते सा विधि श्लोकेन लिख्यते।

रविवारे पायसं च नैवेद्यं परिकीर्तितम् ।
सोमवारे पयः प्रोक्तं भौमे च कदलीफलम् ।।०।।
बुधवारे च संप्रोक्तं नवनीतं नवं द्विज ।
गुरुवारे शर्करां च सितां भार्गव वासरे ।।०।।
शनिवारे घृतं गव्यं नैवेद्यं परिकीर्तितम् ।
सप्तविंशतिनक्षत्र नैवेद्यं श्रूयतां मुने ।।०।।

घृतं, तिलं, शर्करां, दधि, दुग्धं, किलाटकम् (मलाई) दधिकूचिम् (लस्सी), मोदकं, फेमिकां, घृतमण्डकं, कंसारं, वटपत्रं, घृतपूरम् (घेवर), वटकं (पकौड़ी), कोकरसकं घृतमिश्रित चणकचूर्णम् , मधु, सूरणम् (चूरमा) गुडं पृथुकं, द्राक्षा, खर्जूरं, चारकं, अपूपं (मालापूआ), नवनीतं (मक्खन), मुद्गमोदकं, मातुलुंगं (अनार), इमानि सप्तविंशतिवस्तूनि दैव्यै नैवेद्याय वर्तन्त, इमान्येव नक्षत्रसम्बन्धीनि नैवेद्यानि कथितानि। अन्यान्यपि बहुविधानानि सन्ति परन्त्वधिकं विस्तृतं भविष्यति कलेवरं प्रबन्धस्य अत अत्रैव विरामं युक्तं प्रतिभाति।

अहं त्वध्यायस्य प्रारम्भे एव कथितं यत् सम्पूर्ण देवीभागवतं तन्त्रेणप्रभावः विद्यते, सर्वेषु स्कन्धेषु देव्याः स्तुतिः तन्त्रात्मकाः सन्ति, देवीपूजायाः विधानमपि तन्त्रेण प्रभावाः विद्यन्ते इति।

••••••••••••••••••••••••••••••••••••••••••

# *चतुर्थोऽध्यायः*

**तन्त्राणां संक्षिप्त परिचयः**

तन्त्रस्य प्राचीनता प्रामाण्यं च, सिन्धुद्रोणसभ्यतायां तन्त्रस्य प्रगारम्भः। तन्त्रस्येतिहासे विचारद्वयो दृश्यते----

**(१) ऐतिहासिक दृष्टिः।**

**(२) शास्त्रीय दृष्टिश्च।**

ऐतिहासिकदृष्ट्या शैवशाक्त तन्त्रमतिप्राचीनमस्ति। अस्य प्राचीनताया अनुमानं हडप्पा मोहनजोदडोखनने प्राप्तलिङ्ग योनि चिह्नैः कर्तुं शक्यते। शिवशक्तिप्रतीकरूपे लिङ्गयोनिपूजा सहस्रेभ्यः वर्षेभ्यः भवतिस्म। मातृपूजाया विशिष्टरूपाण्यपि प्राप्यन्ते। सिन्धुद्रोणि सम्भ्यतायां शिवस्य पशुपतेस्तथायोगमुद्रासु स्थितानामुपविस्टानां वा योगिनामनेकामुद्राः प्राप्ता, यास्तन्त्र साधनाया बहुप्रकारान् सूचयन्ति।, किन्तु तस्याः सभ्यतायाः वैदिकसभ्यतया सह भेदात्मकः सम्बन्धः आसीदिति न निश्चितम्।

**तन्त्रस्य बीजम् - - -**

तान्त्रिकदर्शनस्य साधनायाश्चानेकानि बीजान्यथर्ववेदे उपलब्धानि भवन्ति। मन्त्रयोगाभिचारादि विषयका अथर्ववेदांशा कैश्चिद्विद्वद्भिः प्रागैतिहासिकयुगीयास्तथा ऋग्वेदस्य यज्ञपरकेभ्यः ऋग्भ्यः प्राचीनतरा मन्यन्ते। अथर्वनिति शब्दः शान्तिक पौषाभिचारिकार्थकः। अथर्वेदस्याथर्वाङ्गिरा इति द्वितीयं नामापि प्रचलितम्। अथ ऋग्वेदात्प्राचीन तरस्य प्रागौतिहासिकस्य तन्त्रधर्मस्य वीजमथर्व वेदश्रुतौ सुरक्षितं वर्तते।

आगमशास्त्रेषु प्रतिपादिता तान्त्रिकी विद्या वेदेन सहस्त्रम्बद्धा तथाप्ययोगमतन्त्र वैदिकं मन्यते। विभिन्नेषु तन्त्रसम्प्रदायेषु विधिनिषेधोलङ्घनात्तथा पञ्चमकार षट्कर्मादि प्रयोगादागमोऽथवा तन्त्रं वेदवाह्यं प्रोक्तम्।

श्रीरामानुजाचार्य्यैः सांख्यं योगं पाञ्चरात्रं वेदं तथा पाशुपतागमान् समानतया प्रामाणममन्यत।[1] कूल्लूकभट्टो मनुस्मृतिः[2] टीकायां वैदिकतान्त्रिकरूपो द्विप्रकारश्रुती

---

१- श्रीभाष्ये २।२।४२।

२- मनुस्मृतौ २।१।

प्रत्यापादयत्[१]। भास्कररायस्तन्त्रं धर्मशास्त्रे स्मृतौ वान्तर्भूतं वदन् मन्वादिभिः प्रणीताः स्मृतीः कर्मकाण्डस्याङ्ग तथा तन्त्राणि ब्रह्मकाण्डं मनुते[२]। अभिनव गुप्तो न केवलं तान्त्रिकान् सम्प्रदायानपितु वेदानपि शिवसकाशादुद्भूतान् स्वीकृत्य कस्यापि समुदायस्य निन्दनं न कार्यमिति मान्यतां प्रकटितवान्।

**सांख्यं योगं पाञ्चरात्रं वेदांश्चैव न निन्दयेत् ।**
**यतः शिवोद्भावाः सर्वमिति स्वच्छन्द शासने[३] ।।०।।**

इदमपि कथ्यते यत् सत्ययुगाय स्मृतिस्त्रेतायुगाय पुराणानि च द्वापरयुगायाधिकमुपयोगिनी किन्तु कलियुगे तन्त्रमेवाधिकतरं प्रभावि। पुराणेषु लोकप्रसिद्धः सामान्योधर्मी व्रतोपवासपर्वानि च विभिन्नेराख्यानैः सह वर्णितानि सन्ति--- तेषु प्रतिपादिता साधना गुह्या नास्ति। तन्त्रागमे प्रतिपादिताः साधना ब्रौद्धजैनशैवशाक्तवैष्णवादिषु सर्वेषु सम्प्रदायेषु गुह्यास्ति। महानिर्वाणतन्त्रे लिखितमस्ति----

१- श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च।

२- सौभाग्यभास्कर नाम ललितासहस्त्र नाम स्तोत्र टीकायाम्।

३- तन्त्रालोके ३५।३ ।

कलिकल्मषादीनां द्विजादीनां सुरेश्वरि ।
मेध्यामेध्या विचाराणां न शुद्धिः श्रौतकर्मणा
न संहिताद्यः सम्मृतिभिरिष्ट सिद्धिनृणां भवेत[1] ।।

तदनुसारेण कलियुगे एकमात्रं तन्त्रे प्रतिपादिताः मन्त्राः सिद्धिदायकाः। श्रौतमन्त्राः विषहीनसर्पवन्निर्वीर्य्याः।

तन्त्रागमशास्त्रमते शुद्धान्तः कारणतां योगिनां चित्ते शब्दब्रह्मविवर्तरूपे परादिचतुर्विधवाणीक्रमेण शास्त्राणामवतारो देशकालदृष्ट्या प्रवर्तते। अत एव शक्तिसंगमतन्त्रस्य पर्यायसप्तके प्रकरणे देशकाल पर्यायरूपे नानाविधानां तन्त्राणामाविर्भावो मन्यते।

वेदवदागमानामुद्भवाऽप्यनादिकालतो मतः किन्त्वाग्रमग्रन्थानां प्रणयनकालः चतुर्थपञ्चमशताब्दी पूर्वं मन्यते। अनेकानां तन्त्राणां प्रणयनं दशमशताब्दीपश्चादपि निरन्तरं वर्तते। तेन च सम्प्रदायविशेषाणामुपासनापद्धतिं प्रचारयन्ति। एकादशशताब्दीपूर्वमर्थादभिनवगुप्तकालात् पूर्वमाविर्भूता आगमा प्राचीना इति तथा परवर्तिनकाले अवतीर्णा आगमा नवीना

---

१- महानिर्वाणतन्त्रे २।५-६ ।

इत्युच्यन्ते।

साधारणतया तन्त्रशास्त्राण्यागमनिगमभेदतो श्रेणीद्वये विभक्तानिस्सरन्ति। आगमशास्त्रे शिवो वक्ता, देवी श्रोत्री, भगवान्विष्णुरनुमोदकः। निगमशास्त्रे देवी वक्त्री शिवश्रोता नारायणश्चानुमोदकः। आगमः साधनप्रधानो निगमश्च विज्ञानप्रधानः। एतामेवागमनिगमैः प्रतिपादतां साधनां वेदगर्भां तान्त्रिकीं साधनामाहुः। तन्त्रस्य परमस्वरूपम् , यद्यपि वेदतन्त्राणि शब्दात्मकानि सन्ति वस्तुतस्तानि ज्ञानस्यैव प्रकारभेदाः। एतज्ज्ञानं दिव्यमपौरुषेयं च मतम्। वेदस्यस्वरूपमतीन्द्रियं शब्दात्मकं सूक्ष्मं ज्ञानविशेषं मन्यते। मन्त्रदर्शिन ऋषिगणास्त-त्प्राप्य सर्वज्ञा अभवनन्ततश्चात्मज्ञानमुपलभ्य जीवनं सफलमकुर्वन्। वेद एकः स्वरूपतश्चाभिन्नः, स बोधात्मकः। किन्त्वभिव्यक्तिकाले वागात्मको भूत्वा स शब्दक्रमेण प्रकाशते।

ज्ञानाततरणस्य चतुर्भौम्यम् , ज्ञानस्य वाग्रूपे चतस्रो भूमयः सन्ति (१) परा, (२) पश्यन्ती, (३) मध्यमा, (४) वैखरी च।

१- परावाक् सर्वमूलम्। सा बोधस्वरूपा समस्तानां च भावनां पूर्णस्थितिः। अस्यां परावाच्यनन्तानि शास्त्राणि परबोधरूपे वर्तन्ते। सृष्टिकाले तानि क्रमशो निम्नभूमिका स्ववतरन्त्यर्थाद् बहिर्मुखरूपे प्रकाशन्ते।

२- पश्यन्ती-- सर्वप्रथममहंज्ञानमन्तर्हृदय उदेति। अस्यांस्थितौ परमबोधः स्फुट नास्ति। वाच्यवाचकावर्थाच्छब्दार्थौ तु वर्तेते। परन्तु तौ परस्परं पृथग्रूपेण भासमानौ स्तः। वाच्यार्थः प्रत्यवमर्शकेन प्रमात्रो प्रमृष्टो भवति, इति पश्यन्ती भूमिः।

३- मध्यमा-- तत्पश्चात् बहिर्मुखस्य भावस्य वृद्ध्या मध्यमा वागुदेति। तद्भूमेरन्तराले वाचार्थौ वाच-वाचकस्वभावं गृहीत्वोलसति किन्त्वभ्यन्तर एव। अस्यां मध्यमाभूमौ परमेश्वर आत्मस्वरूपमंशद्वये विभज्यस्वयमेव गुरु शिष्यरूपं गृह्णाति तस्य च कल्पितस्य गुरुशिष्य भावस्याश्रयेणैव गुप्तं ज्ञानं प्रकटीकरोति। गुरौ सदाशिवे वा परमेश्वरः स्वीयां पञ्चशक्तिमर्थाच्चिदानन्देच्छाज्ञानक्रियां पञ्चमुखरूपे प्रकटयति। यतो निखिलानि शास्त्राणि पञ्चस्त्रोतरूपेणावतरन्ति। किन्वस्यां मध्यमाभूमौ तान्यस्फुटरूप एव वर्तन्ते।

४- वैखरी-- ज्ञानावतरणे चतुर्थ्यथवान्तिमा दशा वैखरीत्याख्यायते। वैखरीमागत्य तानि परिस्फुटन्ति शान्त्ररूपं चाकारं वा धारयन्ति।

यानि शास्त्राणि जगति प्रकाशितान्येव येषां च प्रकाशोऽद्य यावन्नाभवद्यानि च प्रकाश्य लुप्ततामागच्छन् तानि सर्वाणि परावाचि परबोधभावेन नित्यं वर्तमानानि सन्तीत्य द्वैतागमस्य सिद्धान्तः। तन्त्रस्यैतदेव परमं स्वरूपमस्ति।

आगमाः तन्त्रशास्त्रे सर्वोत्कृष्टाः वर्तन्ते तस्य भेदाः तस्य त्रिविधा भेदाः----

(१) ब्राह्मणतन्त्रम्।

(२) बौद्धतन्त्रम्।

(३) जैनतन्त्रम् च।

तेषामध्ये ब्राह्मणतन्त्रमुपास्य भेदेन त्रिविधम्---

(१) शैवं, (२) शाक्तं, (३) वैष्णवं च। शैवागम स्त्रिविधः।

(१) रुद्रागमः, (२) शिवागमो (३) भैरवागमश्च। शाक्तागमोऽपि त्रिविधः।

(१) कौलागमः, (२) मिश्रागमः, (३) समयागमश्च। वैष्णवागमोऽपि त्रिविधः----

(१) पाञ्चरात्रागमः, (२) वैखानसागमः, (३) भागवतागमश्च,।

तान्त्रिकस्य साहित्यस्येतिहासे दश शिवागमा अष्टदशरुद्रागमाश्च संकलतोऽष्टाविंशत्यागमा इति नाम्ना प्रसिद्धाः। कुत्र कुत्रचिदेत आगमाः साधारणतो द्वैतद्वैता द्वैतदृष्टिसमर्थकरूपे निर्दिष्टाः। परन्त्वेषां प्रामाणिकता सर्वत्र समानामङ्गीकृता। पौष्करागमानुसारेणोभय विधं शैवमतं सिद्धान्तशास्त्ररूपेण स्वीकृतमस्ति। प्रत्येकस्मिनागमे (१) विद्या, (२) योगः, (३) क्रिया, (४) चर्या चेति चतुष्पादो भवति। परन्त्वीदृशं सर्वाङ्गसमन्वितमागमस्वरूपं सर्वत्र नोपलभ्यते।

**आगमानां पञ्चस्त्रोतैः सम्बन्धः----**

कामिकागमानुसारेण सदाशिवस्यपञ्चमुखेषु प्रत्येकेन सह पञ्चस्त्रोताः सम्बद्धाः। प्रत्येकस्य मुखस्य पञ्चस्त्रोतानामिमान्यतानि नामानि सन्ति।

(१) लौकिकः, (२) वैदिकः, (३) आध्यात्मिका, (४) अतिमार्गः, (५) मन्त्रश्च।

एतेषां मध्ये लौकिकादितन्त्राणि पञ्चप्रकाराणि। एतेषूर्ध्वतो निर्गतानि सर्वश्रेष्ठाणि तदनन्तरं पूर्वोत्तर पश्चिम दक्षिणदिशा सम्बद्धानि। एतत्क्रमानुसारेण सिद्धान्तविदां दृष्ट्या सिद्धान्तज्ञानं मुक्तिप्रदमतः सर्वोत्कृष्टम्। तदनन्तरं क्रमशः सर्वविषहारकं गारुडज्ञानं, सर्ववशीकरणप्रतिपादकं कामज्ञानं, भूतनिवारकं भूततन्त्रं शत्रुक्षये चोपयोगि भैरवतन्त्रं व्यवस्थितमस्ति। वैरोचनः शिवाचार्यः स्वीये प्रतिष्ठालक्षणसारसमुच्चय नामके ग्रन्थे शिवस्य पञ्चमुखेभ्यः[1] आविर्भूतानां १६४ तन्त्राणां नामोल्लेख प्रसंग इदमब्रवीत्----

**सिद्धान्ते चतुर्वर्णान्नभोजनं गारुडे विषम् ।**
**भूततन्त्रे शवस्पर्शः पञ्चस्रोतः स्वयं विधिः ।।०।।**

**शैवतन्त्रगता परम्परा---**

सत्ययुगात् कलियुगपर्यन्तं शैवपरम्परा सिद्धतन्त्रानुसारेण सर्वप्रथमं निखिलशास्त्रपदानां संख्या नवकोटिरासीत्। तानि

१- प्रतिष्ठालक्षणसारसमुच्चये २।१३१-१३२

सर्वाणि शास्त्राणि भैरवेणाधीता अभवन्। भैरवो भैरवीमष्टकोटिमधीयाय। एवं कोट्यपकर्षत एतज्ज्ञानं क्रमशोऽवतरत् कोटिपर्यन्तं न्यून्यभवत्।

**दिव्यागुरुशिष्यपरम्परा तथासीत्----**

(१) भैरवो, (२) भैरवी, (३) स्वच्छन्दो, (४) लाकुल, (५) अनने, (६) गहनेशो, (७) ब्रह्मा, (८) इन्द्रो, (९) वृहस्पतिश्च।

वृहस्पतिः कोटि विभज्याष्टेभ्यः शिष्येभ्यः पृथक्पृथग्भागमशिक्षयत। अष्टशिष्याणां नामन्येतानिमानि----

(१) दक्षादयः, (२) संवर्तादयो, (३) वामनादयो, (४) भार्गवा (५) बलिः, (६) सिंहो, (७) विनातो, (८) वासुकिनागश्च।

स्वर्गाद्रावणोऽर्धमपहृत्य पृथिवीमानिनाय। ततोऽर्धं रामो विभीषणामुखादाप। गुरुशिष्य क्रमादिति सर्वशेषः। इयं पार्थिवा परम्परेत्थमासीत्---

(१) विभीषणो, (२) रामो, (३) लक्ष्मणः, (४) सिद्धगणाः, (५) दानवाः, (६) गुह्यका, (७) योगिनः, (८) श्रेष्ठा मनुष्याश्चेति।[१]

१- तन्त्रालोक---- कैलाशपर्वते श्रीकण्ठरूपेण प्रकटीभूत्य महर्षिणे दुर्वाससे शैवशास्त्रान्युपदि देश तथा पृथ्वीतले जीवानां पुनरुत्थापनार्थमेता न्द्वैतद्वैताद्वैताद्वैतमार्गनिर्देशकान् लुप्तानागमान् पुनः प्रचारितुमादिशत्। तदनुसारेण दुर्वासो स्वीययाऽलौकिक्या शक्तया त्र्यम्बकामर्दनश्रीना-नामकास्त्रीन्मानसिकान् पुत्रानजनयत्तेभ्यश्च पुत्रेभ्यः क्रमशोऽभेदभेदभेदाभेद शाखा अशिक्षयत्। इमास्तिस्त्रोधाराः क्रमशो व्यस्तृण्वन्। एवं त्रयाणां शैवतन्त्रमतानामुत्पत्तिरभवत्। प्रत्येकं मतं स्वादिप्रचारकनाम्ना प्रसिद्धमस्ति।

**शैवादीनि रहस्यानि पूर्वमासन्महात्मनाम् ।**
**ऋषीणां वक्त्रकुहरे तेष्वेवानुग्रहक्रिया ।।०।।**
**कलौ प्रवृत्ते यातेषु तेषु दुर्गमगोचरम् ।**
**कलापिग्राम प्रमुखमुच्छिन्ने शिवशासने ।।०।।**
**कैलासाद्रौ भ्रमन्देवो मूर्त्या श्रीकण्ठरूपया ।**
**अनुग्रहायावतीर्णश्चोदयामास भूतले ।।०।।**

---

१- तन्त्रालोके ३६।१-१०

मुनिं दुर्वाससं नाम भगवानूर्ध्वरेतसम् ।
नोच्चिते यथाशास्त्रं रहस्यं कुरु तादृशम् ।।०।।
ततः स भगवान्देवादेशं प्राप्यं यत्नतः ।
ससर्ज मानसं पुत्रं त्र्यम्बकादित्यनामकम् ।।०।।

शिव पु० ३६।१-१०

## कलियुगे तन्त्रस्य प्रचारः---

कलियुगपूर्वमृषिमुनय एतेषां शैवसिद्धान्तानां प्रवचनं प्रचारं च मौखिकमेव कुर्वन्तिस्म। अत एतद्दर्शनं शिष्यप्रशिष्यैः कथनश्रवणेनैव संसारजीवानुद्धरितिस्म। परन्तु कलियुगाविर्भाविनैव एते ऋषिमुनयो गुह्यकन्दरासु तिरोबभूवुः। परिणामतएतद्विशाल-मागमतन्त्रसाहित्यं कलियुगवातावरणस्य वृद्ध्या लुप्तमभवद्येन साधकानामाध्यात्मिको मार्गोऽवारुधत्।

पारंपरीयकथानुसारेण भगवान् शिव इमां दशामवलोक्य पीडितासुजनतासु दयां प्रकाशयन् त्र्यम्बकः स्त्रीसम्प्रदायशिक्षार्थं स्वध्यानशक्तया कन्यामुदपयन्। अस्या अर्ध त्र्यम्बक नामाशाखा-रभ्यत।

**तन्त्रालोक--**

जयति गुरुरेक एव श्रीश्रीकण्ठो भुवि प्रथितः ।
तदपरमूर्तिर्भगवान् महेश्वरो भूतिराजश्च[1] ।।०।।

एक एव गुरुः इत्यनेन अस्य अवतारकत्वं सूचितम्। महेश्वर इति यः श्रीसन्तत्यर्धत्रैम्बकारव्यमठिकयो र्गुरुतया अनेन अन्यत्रोक्तः परमेश इति ईश इति च।

भट्टारिकादिभूत्यन्तः श्रीमान्सिद्धोदयक्रमः ।
भट्टादिपरमेशान्तः श्रीसन्तानोदयक्रमः ।।०।।
श्रीमान्भट्टादिरीशान्तः परमोऽथ गुरुक्रमः ।
त्रिकरूपस्त्रिकार्थे मे धियं वर्धयतांतराम्[2] ।।०।।

इति तदपरमूर्तिः इत्यनयोभगवदावेशमयत्वं दशितम्। यद्यपि यो यत्र शास्त्रेऽधिकृतः स तत्र गुरुः।

एवञ्च तन्त्रप्रक्रियोपासन्नगुर्वभिमुखीकरणानन्तरं विश्रान्तिस्थानतया कुलप्रक्रिया गुरुमपि उत्कर्षयति।

---

१- तन्त्रालोक १आ० श्लोक ९ पृष्ठ ३७

२- तन्त्रालोक १आ० पृ० ३८

शाक्तागमानां भेदाः--- त्रिधा भेदाः----

(१) कौलागमाः।

(२) मिश्रागमः।

(३) समयागमश्च।

एतेषां मध्ये चतुषष्ठि कौलग्रन्थाः, ८ मिश्रास्तथा ५ समयागमाः सन्ति। शक्तिविषयं ग्रन्थशास्त्रं व्यूहेषु विभक्तमस्ति। सत्त्वादिगुणत्रयानुसारेणैतं त्रिव्यूहं (१) तन्त्र, (२) यामलं, (३) डामरं चाहुः। प्रत्येक ६४ ग्रन्थैः समस्य सम्पूर्णं साहित्यं १६२ ग्रन्थपरिगृहीतं स्वीक्रियते।

**कौलागमः---**

चतुष्षष्ठि तन्त्राणि (६४ तन्त्र) कौलागमा ६४ तन्त्रनाम्ना परिचिता। एतेषां तन्त्रेषां नामानि चतुः शत्यामुल्लिखितानि सन्ति। नित्याषोऽशिकार्णव एषां नामानां विस्तृताव्याख्या भास्कररायरचिते सेतुबन्धावस्ति।

सौन्दर्यलहरी टीकायामपि लक्ष्मीधरस्तानि तन्त्राणि व्याख्यायत्। सर्वेषां तन्त्रणां वक्ता शिवः श्रोत्री च पार्वती। प्रत्येकं तन्त्रं तत्तत्पुरुषार्थप्रदामुपासनां प्रदर्शयति। चतुः शत्यामुल्लिखतानां ६४ तन्त्राणां नामानि लक्ष्मीधर व्याख्या सहितानि तथा विधानि----

(१) महामायातन्त्रं (२) शबरतन्त्रं च।

उभयोर्मायाप्रपञ्चनिर्माण चर्चास्ति मोहिनीविद्या च प्रतिपादिता।

(३) योगिनीजालशबरः। माया प्रधानं तन्त्रं शम्बर इति।

(४) तत्त्वशम्बरः। एष महेन्द्राजालविद्या विशेषः।

(५-१२) भैरवाष्टकम्। अर्थात् (५) सिद्धभैरवो, (६) वटुकभैरवः, (७) कंकालभैरवः, (८) कालभैरवः, (९) कालाग्निभैरव, (१०) योगिनी भैरवः, (११) महाभैरवः, (१२) शक्तिभैरवश्च। (१३-२०) बहुरूपाष्टकम्---

(१३) ब्राह्मी (१४) माहेश्वरी, (१५) कौमारी (१६) वैष्णवी, (१७) बाराहा (१८) चामुण्डा, (१९) शिवद्वती (२०) अज्ञातं (ऐन्द्री च। एतानि सर्वाणि शक्तेरद्भूतानि मातृकारूपाणि सन्ति। एतदष्टमातृका विषय अष्टतन्त्राणि रचि तानि। एतानि

सर्वाणि अवैदिकानि मन्यन्ते।

(२१-२८) यमलाष्टकम्---- यमलाशब्दस्य कार्यसिद्धाम्बेरयर्थः।

(२९) चन्द्रज्ञानम्। अस्मिन् षोडश विद्या प्रतिपादिताः।

(३०) मालिनि विद्या। अस्मिन् समुद्रयानोपायो वर्णितः।

(३१) महासम्मोहनं। जाग्रदव्यक्तेः सुप्तीकरणविद्या।

(३२) वामजुष्ट तन्त्रं, (३३) महादेवतन्त्रं (३४) वातुलतन्त्रं।

(३५) वातुलोत्तरतन्त्रं, (३६) कामिकतन्त्रं चेति मिश्राणि तन्त्राणि सन्ति।

(३७) हृदभेदतन्त्रम्। एतत्कापालिकमतम्।

(३८) तन्त्रभेदतन्त्रम्, (३९) गुह्यतन्त्रं च, अत्र गुप्तभावेन परकृततन्त्रस्य भेदोपायो वर्णितः। उभाववैदिकौस्तः।

(४०) कलावाद तन्त्रं। अय तन्त्रः कामशास्त्रमस्यैवान्तर्गमतम्।

(४१) कालासारः। अयं वामाचार प्रधानम्।

(४२) कुण्डिकामतम्। गुटिकासिद्धि वर्णिता वर्तते।

(४३) मतोत्तरमतम्। असिमन् रससिद्धेर्विवेचना प्राप्यते।

(४४) वीणाख्यतन्त्रम्।

(४५) त्रोतलतन्त्रम्।

(४६) त्रोतलोत्तरतन्त्रम्। अस्मिन् ६४००० याक्षिणीनां दर्शनोपायः।

(४७) पञ्चामृतम्। पृथिव्यादि पञ्चभूतानां भरणाभावः पिण्डापिण्डे कथं संभाव्य इति विवरणम्। एतदपिकापालिकमतम्।

(४८) रूपभेदो, (४९) भूतोड्डामरः, (५०) कुलसारः, (५१) कुलोड्डीशः, (५२) कुलचूड़ामणिरति पञ्चतन्त्रेषु मन्त्रादि प्रयोगेन मरणोपायो वर्णितः। एतेऽवैदिका ग्रन्थाः।

(५३) सर्वज्ञानोत्तरः (५४) महाकालीमतं, (५५) अरुणेशः, (५६) मोदनीशः, (५७) विकुण्ठेश्वर इति पञ्चतन्त्राणि दिगम्बरसम्प्रदायस्योपजीव्या ग्रन्थाः सन्ति। एषः सम्प्रदायः कापालिकसम्प्रदास्यावान्तरभेदमात्रोऽस्ति।

(५८) पूर्वं, (५९) पश्चिमं, (६०) दक्षिणं, (६१) उत्तरं, (६२) निरुत्तरं, (६३) विमलं (६४) देविमतं चेति क्षपणकमतस्य ग्रन्थाः। क्षपणकसम्प्रदायो दिगम्बरसम्प्रदायस्याव-न्तरभेदोऽस्ति।

वामकेश्वर तन्त्रटीकाकारस्य श्रीदेवव्रतस्य मत उक्तानि तन्त्राणि तथाविधानि----

(५-१८) अष्टभैरवतन्त्रं, (१२-१९) बहुरूपाष्टकतन्त्रं (अष्टशक्तिः)। (२०-२७) अष्टयामलतन्त्रम् (२८) षोडश-नित्योपासना, (२९) समुद्रोल्लर्लाङ्गवीविद्या।

(३०) सम्मोहिनी विद्यासिद्धिः।

(३१-३६) वामाचार विधानम्।

(३७-३८) पराविद्यानिर्धनविधानम्।

(३९) वात्स्यायनकोकशास्त्रं वशीकरणादिदशकम्।

(४०) वर्णकला विद्वा। (४१) स्तम्भनशक्तिगुटिकौषध्यादयः। (४२)पारदसिद्धिविधानं (पारद संहिता)।

(४३) यक्षिणी विद्या, (४४) औषधीन्द्रजालान्तर्दृष्टिसिद्धिप्रकाराः। (४५) यक्षिणी दर्शनं, (४६) कायाकल्पविधानदयः। (४७-५१) षटकर्म,। (५२-६४) क्षपणकमतमिति। एतानि ६४ तन्त्राणि केवलमैहिकफलदायिनी। तेषां कश्चिदपि पारमार्थिककल्याण सङ्केतो न प्राप्यते। लक्ष्मीधरमते तान्यशेषाणि अवैदिकानि सन्ति। परन्त्वेतान्यपि परमेश्वरसकाशादवतरितानि। सन्ति यतः स सर्वलोकानां कृते तन्त्रशास्त्रमरचयत्। तेषां प्रत्येकस्याधिकारः सर्वेषु तन्त्रेषु नास्ति। ब्राह्मणादि वर्णत्रयस्याधिकारोऽदीयत। अधिकार भेदेन व्यवस्थाभेदो भवतीति लक्ष्मीधरस्य विचारः।

**नवयुगस्य चतुषष्ठि तन्त्राणि----**

तोडलतन्त्रे निर्दिष्टा ६४ तन्त्राणां नामसूची नवयुगमतं मन्यते, तोडलतन्त्रउल्लिखितानि नामानि सर्वानन्दः स्वरचितं

सर्वोल्लासतन्त्रेऽददत्। एषा नामसूची न चतुः शतीसूच्यनुरूपा न च श्रीकण्ठीसूच्यनुरूपा। सर्वोल्लासे दत्ता तोडलतन्त्र सूची निम्नलिखिताः----

(१) काली (२) मुण्डमाला (३) तारा (४) निर्वाणं, (५) शिवसारो, (६) वीरो (७) निदर्शनं (८) लतातन्त्रं (९) तोडलतन्त्रं (१०) नीलं (११) राधा (१२) विद्यासारः (१३) भैरवः (१४) भैरवी, (१५) सिद्धेश्वरी (१६) मातृभेदः, (१७) समया (१८) गुप्तसाधनं (१९) माया, (२०) महामाया (२१) अक्षया (२२) कुमारी, (२३) कुलार्णवः (२४) कालिकाकुलसर्वस्वं, (२५) कालिकाकल्प (२६) वाराही, (२७) योगिनी, (२८) योगिनीहृदयं (२९) सनत्कुमारः (३०) त्रिपुरासारो (३१) योगिनीविजय (३२) मालिनी, (३३) कक्कटः (३४) श्रीगणेशो, (३५) भूतः, (३६) उड्डीशः (३७) कामधेनुः (३८) उत्तमो, (३९) वीरभद्रो (४०) वामकेश्वरः, (४१) कुलचूडामणिः, (४२) भावचूडामणिः (४३) ज्ञानर्णवो (४४) वरदा, (४५) तन्त्रचिन्तामणिः, (४६) वाणीविलासः, (४७) हंसतन्त्रं, (४८) चिदम्बरं तन्त्रं, (४९) फेंकारिणी, (५०) नित्या, (५१) उत्तरः, (५२) नारायणी, (५३) उर्ध्वाम्नायो, (५४) ज्ञानद्वीपो, (५५) गौतमीयतन्त्रं, (५६) निरुत्तरो (५७)

गर्जनं, (५८) कुब्जीका, (५९) तन्त्रमुक्तावली (६०) वृहत्श्रीक्रमः, (६१) स्वतन्त्रतन्त्रं, (६२) योनिः (६३) कामाख्या।

भगवती तन्त्रम्----

ततः परं पशुपतिर्जगदम्बानुरोणेनाखिलपुरुषार्थसंघनात्मकमेकमात्रं महाशक्तिप्रतिपादकं तन्त्रं पृथिव्यामवतारयदिति कथितमस्ति। एतत् कादिमताख्यं तन्त्रमन्यतन्त्रेभ्यो निरपेक्षं स्वतन्त्रंतन्त्रमस्ति, अतस्तदनादितन्त्ररूपेगणितम्। एतत्तन्त्रविषये शङ्कराचार्यरचितायां सौन्दर्यलहर्यामुच्यते। यत्---

**चतुः षष्ठ्यातन्त्रैः सकलमनुसन्धाय भुवनं**
**स्थिरस्तत्तत्सिद्धिप्रसभपरतन्त्रं पशुपतिः ।**
**पुनस्तन्निर्बन्धादखिल पुरुषार्थसंघना**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतार दिवम् ।।०।।**

एतत्स्वतन्त्रभगवतीतन्त्र सम्बन्धे भास्कररायः सेतुबन्धौ कथयति यदेतत् सम्भवतो वामकेश्वरतन्त्रंस्यात्। नित्याषोऽशिकार्णवोऽस्य तन्त्रस्यान्तर्भुक्तः। सौन्दरीलहरीटीकाकारो गौरीकान्तसचतुः षष्ठितन्त्रं सम्भवतो ज्ञानार्णवं लक्ष्य वदति।

परन्त्वन्यसम्प्रदायमते तत् स्वतन्त्रेति विशेषणात्प्रतीतमस्ति यदेतत्तन्त्रराजनामकाय विशिष्टतन्त्राय प्रयुक्तम्।

इति कौलागमाः वर्णिताः।

अष्टाणां मिश्रागमाणां नामानि अग्रे सम्मुल्लिखितानि

(१) चन्द्रकला (२) ज्योत्स्नावती (३) कलानिधिः (४) कुलार्णवः (५) कुलेश्वरी (६) भुवनेश्वरी (७) बहिस्पत्यं (८) दुर्वासामतं च।

समयागमाः

समयागमाः शुभागमपञ्चकनाम्ना प्रसिद्धाः। ते वसिष्ठसनकशुकसनन्दनसनत्कुमार नाम कैर्मुनिभिरुपदिष्टाः पञ्च शुभागमा अनुपलब्धाः सन्ति, केवलं तेषामुदाहरणानि यत्र तत्र प्राप्यते। तेषा नामानि----

(१) वसिष्ठ संहिता (२) सनकसंहिता (३) शुक संहिता (४) सनन्दन संहिता च।

समयमार्गो वैदिकोऽस्ति। वसिष्ठादयः पञ्चमुनयोऽस्य मार्ग प्रदर्शकाः स्मृताः! सः समयाचारावलम्बेन प्रवर्तितः।

सौन्दर्यलहरीटीकायां लक्ष्मीधरः पञ्चशुभागमानामनेकानि प्रामाणान्युद्धरत्। लक्ष्मीधरानुसारेण शङ्कराचार्यः स्वयं समयाचारमनुसरतिस्म। वेदान्तसूत्रेषु प्रथमस्याध्यायस्य शाक्तभाष्ये यत् समयाचारनिरूपणं कृतं तल्लक्ष्मीधर्यां टीकायामेवावधारितम्। शाक्ततन्त्राणां संख्या अत्र उल्लिख्यते--- ६४ तन्त्रेभ्योऽतिरिक्त-मुपलब्धायां तान्त्रिकायां समग्र्रां ३२१ उपतन्त्राणि, ३० संहिता, १०० चूडामणि तन्त्रापि, ९ अर्णवा, ८ यामलास्तथा डाभरोड्डाभरसूक्तकामधेनु सद्भावोज्ज्वलोड्डीशरावणकल्पनादा-दिसहस्राणि तन्त्रारायुद्भूतानि सन्ति।

वैष्णवागमाः

(१) वैष्णवागमाः (२) पाञ्चरात्र (३) वैखानसः भागवतभेदेन त्रिविधा प्राप्ताः। पाञ्चरात्रागमास्तान्त्रिकाः प्रोक्ता वैखानसागमा वैदिका (निगमाः) भागवताश्च मिश्राःस्मृताः।

आनन्दसंहितायां यथोक्तम्---

**निगमस्तान्त्रिको मिश्रस्त्रिविधः प्रोक्त आगमः ।**
**निगमो विखनः प्रोक्तो मिश्रो भागवतः स्मृतः[१] ।।०।।**

चतुः सिद्धान्त सहितः पाञ्चरात्रस्तु तान्त्रिकाः।

पाञ्चरात्रागमाः----

पाञ्चरात्रागमा वेदसमानं प्रामाण्य मन्यन्ते। रामानुजः स्वरचिते श्रीभाष्ये वदति यत्---

**सांख्ययोगः पाञ्चरात्रो वेदाः पाशुपतस्तथा ।**
**आत्मप्रमाणत्येतानि न हन्ति यानि हे तुभिः ।।०।।**

पाञ्चरात्रागमो द्विधा विभक्तः ----

(१) दिव्यो (२) अदिव्यश्च।

---

१- आनन्द संहितायां ८।२३-२४।
२- श्रीभाष्ये २।१०।

भगवतो नारायणेनोपदिष्टाः सात्वतपौष्करजयाद्यः संहिता दिव्यागमा उच्यते। एता रत्नत्रयनाम्ना प्रसिद्धा। तेषां मध्ये सात्वतसंहिता प्राचीनतमाप्रोक्ता। अस्या उपदेशे भगवान् वासुदेवः संकर्षणाय ददौ यन्महाभारते भीष्मपर्वण्युल्लिखितम्[१]। वैष्णवसम्प्रदाये सर्वाभ्यः एताभ्यः संहिताभ्यः समानमादरः प्राप्तः।

(२) अदिव्या आगमाः द्विविधा स्वीकृताः---

(१) ऋषिप्रोक्ता (२) आचार्यश्चोपदिष्टाः। प्राचीनात् साहित्याज्ज्ञातमस्ति यत् पाञ्चरात्रसाहित्यं त्रिषु भागेषु विभक्तमासीत्। यथा---

(१) पाञ्चरात्रश्रुतिः (२) पाञ्चरात्रोपनिषत् (३) पाञ्चरात्रसंहिता च।

हयशीर्षपाञ्चरात्रस्यादि काण्डे २५ पाञ्चरात्रसंहितानां निम्नलिखिता नामवली प्राप्यते----

---

१- शान्तिपर्व महा० ६६।३९-४०।

(१) हयशीर्षं, (२) त्रैलोक्य मोहनं, (३) वैभवं (४) पौष्करं, (५) नारदीयं, (६) प्रह्लादं, (७) गार्ग्यगालवं, (८) श्रीप्रश्नं, (९) शाण्डिल्यं, (१०) ईश्वरसंहिता, (११) सत्योक्तं, (१२) वासिष्ठं, (१३) शौनकं, (१४) नारायणीयं, (१५) ज्ञानार्णवं, (१६) स्वायम्भुवं, (१७) कापिलं, (१८) विहग्रेन्द्रं, (१९) अपरं, (२०) आत्रेयं, (२१) नारसिंहाख्यं, (२२) आनन्दाख्यं, (२३) आरुणं, (२४) बौधायनं, (२५) वैश्वावतारितं च।

महाभारतस्य नारायणोपाख्याने पाञ्चरात्राणामुल्लेखः प्राप्यते। तदनुसारेण नारदः श्वेतद्वीपो जगाम। तत्र च नारायणर्षिसकाशात्तस्य शिक्षां प्राप्यो निनाय। अतो नारायणर्षिरस्य मतस्य प्रवर्त्तको मन्यते। अस्य प्रचारकानां मध्ये कौशिकः शाण्डिल्य औपगायनो मौज्जायनश्च सन्ति।

**वैखानसागमाः---**

वैखानसागमोपदेशं विखानसर्षिर्भृगुकश्यपात्रिमरीचिनामा-र्षिभ्यश्चतुर्यो दत्वा तैरैव प्रचारयामास। एतेषां मध्ये भृगुरधिकारा-त्मकान् कश्यपः काण्डात्मकानत्रिस्तन्त्रात्मकान्मरीचिश्च संहिता-

त्मकान् ग्रन्थान् रचयामास। एत आगमा गद्ये च पद्ये च लिखितो आसन्। वैखानसागमः प्रधानतो वेदमनुसरत्यतस्तं निगममित्याहुः। अस्य श्रौतसूत्रं धर्मसूत्रं गृह्यसूत्रं तथा मन्त्रतन्त्र-संहिता इति चतुर्विधा ग्रन्थाः प्राप्यन्ते।

कस्मिश्चित्समये वैखानससाहित्यं पर्याप्तसंख्यायामुपलब्ध-मासीत्परन्त्वधुना तत्प्रायो लुप्तमस्ति। षष्ठिसंहितायामद्यसप्तदशो-पलब्धाः सन्ति, यथा---

(१) विमानार्चन कल्पः, (२) आनन्दसंहिता, (३) आदिसंहिता, (४) क्रियाधिकारः, (५) खिलाधिकारः, (६) प्रकीणाधिकारो, (७) यज्ञाधिकारो, (८) अर्चनाधिकारो, (९) वासाधिकारो, (१०) निरुक्ताधिकारो, (११) मानाधिकारः, (१२) चित्राधिकारः, (१३) वर्णाधिकारः, (१४) पुरातन्त्रं, (१५) समूर्तार्चनाधिकारो, (१६) ज्ञानकाण्डः, (१७) भृगुसंहिता चेति।

एतत्संहितातिरिक्त केचित् टीकाव्याख्यपद्धतिग्रन्था अप्युपलब्धाः सन्ति।

सर्वे वैखानसागमा ज्ञानक्रियाचर्यायोगनामकेषु चतुः पादेषु विभक्ताः। तन्त्रागम शास्त्राणामियं विशेषता सर्वत्रैव दृश्यते।

**भागवतागमाः---**

भागवतागमानामन्तर्भावो वैष्णवागमानां मिश्र विभागं भवति। वैदिकी तान्त्रिकी मिश्रा चेति भगवतो विष्णोसिविचारा-धनापद्धतिः। तत्र मिश्रविभागो वैदिक्यास्तान्त्रिक्याश्चेति। पूजाविधीनां समन्वितं रूपं स्वीक्रियते। तत्स्मार्ततन्त्रमुच्यते--

हयशीर्षे दशानां भागवतागमानां सूची दत्ता। यथा---

(१) अष्टाक्षर विधानं, (२) तन्त्रभागवतं, (३) शिवोक्तं, (४) विष्णुभाषितं, (५) पद्मोद्भवं, (६) पुराणं, (७) वाराहं, (८) सामान्य संहिता, (९) व्यासोक्ता संहिता, (१०) परमसंहिता चेति,।

इतित्रिविधानां वैष्णवागमानां संक्षिप्तः परिचयः। उपासनाक्षेत्रे कर्मयोगज्ञानापेक्षमात्र भक्तिश्रेष्ठता स्थापितास्ति।

## तान्त्रिकाः सम्प्रदायाः

प्राचीनकाले बहवः शैवसम्प्रदायाः प्रचलन्तिताः आसन्। तत्सम्प्रदायेन सह संश्लिष्टाः साधनतत्त्व विषयका ग्रन्थादयोऽनु-पलब्धाः भवन्ति। तत्तत्सम्प्रदायस्य च केवलं नाम एव प्राप्यते। तेषां साधनादृष्टिभङ्ग्योर्विवरणं कस्मिश्चिद्ग्रन्थे न प्राप्यते। तादृशानां केषाञ्चित् सम्प्रदायानां नामानि दीयते---

(१) पाशुपतमतं, (२) लाकुलमतं, (३) कोलमतं, (४) कापालिकमतं, (५) सौम्यमतं, (६) महाव्रतमतं, (७) जंगममतं, (८) कारुणिकमतं, (९) कालानलमतं, (१०) कालामुखमतं, (११) भैरवमतं, (१२) वाममतं, (१३) भट्टमतं, (१४) नन्दिकेश्वरमतं, (१५) रसेश्वरमतं, (१६) शैवसिद्धान्तमतं, (१७) रौद्रसिद्धान्तमतमिति।

एते सर्व सम्प्रदायाः कितताप्यंशेन शक्तिवादन आसन् किन्त्वेषः शक्तिवादः सर्वेषु समानो नासीद्यतः शैवपाशुपतादिषु सम्प्रदायभेदेषु शक्तेः स्वरूपं शिवेन च तत्सम्बन्धो विभिन्नरूपेषु गृहीतः। सर्व एते विभिन्नाः सम्प्रदायाः साधारणतया शैवसम्प्रदाया अथवा माहेश्वर सम्प्रदाया स्तान्त्रिकाः सम्प्रदाया वेति किंचिन्नाम्ना प्राचीनं साहित्ये वर्णिताः।

**शैवधर्मस्याष्ट सम्प्रदायाः---**

यथोक्तं कलियुग आगमानां द्वैतद्वैताद्वैताद्वैत इति त्रिविधो मार्गः श्रीकण्ठाज्ञवशाद्दुर्वाससा पुनः प्रवर्तिकत आसीत्। एतस्त्रिभिर्मार्गैः संश्लिष्टास्त्रयो मठा प्राचीने काले प्रसिद्धा आसन्। एतस्य शैवधर्मस्य दार्शनिकं स्वरूपमष्टानां सम्प्रदायानां मतवादानामथवा सिद्धान्तानां रूपे व्यकासयत्। शैवधर्मस्यैते सम्प्रदाया निम्नलिखिता----

(१) पाशुपतं, (२) लकुलीशपाशुपतं, (३) द्वैताद्वैतं, (४) नन्दिकेश्वर (अद्वैतं), (५) रसेश्वरं (द्वैताद्वैतं) (६) शैवसिद्धान्तं, (७) वीरशैवं (शक्ति विशिष्टाद्वैतं), (८) त्रिकं (अद्वैतं) च।

**१ - द्वैतशैवमतम् ---**

शैवदर्शनस्य द्वैतधारामर्दकनामकेन दुर्वासापुत्रेण प्रचारिता आसीत्। तस्मिन्मते जीवस्य (पशोः) शिवस्य (पत्तेः) च पृथक सत्ता स्वीक्रियते।

वामनपुराणे चतुण्णी शैवसम्प्रदायानामुल्लेखः प्राप्यते। यमुनाचार्य आगम प्रामाण्ये तेषां परिचयमददात्। शङ्कराचार्यः स्व रचिते ब्रह्मसूत्रभाष्ये चतुर्विधं शैवमतमथवा चतुर्महिश्वरमतं चर्चयति। तेषां चतुः सम्प्रदायानां नामानि---

(१) पाशुपतं, (२) सिद्धान्तशैवं, (३) कालमुखं, (४) कालालिकं चेति।

**पाशुपतंमतम् ---**

प्राचीनं पाशुपतमतं श्रीकण्ठपरम्परागतं मन्यते। अस्याद्यः प्रवक्ता भारद्वाजः। तस्य राजर्षमसोमकेश्वरनामः शिष्य आसीत्।

**सिद्धान्तशैवमतम्---**

सिद्धान्तशैवमतस्य प्रवक्ता वासिष्ठः शक्तिर्मन्यते यस्य गोपायनामा शिष्य आसीत्। सिद्धान्तशैवमतमपि श्रीकण्ठपरम्परायां परिगण्यते। अस्य स्थापना मध्यदेशेऽभवत्। आमर्दकादय आचार्यास्तत्रैवावतरिता आसन्। मध्यदेशाच्छैव शासनं सर्वत्र प्रससार।

आमर्दकण्ठस्य स्थापयिता दुर्वासा ऋषिरासीत्। तस्य परम्परा व्यापक शम्भुतोऽचलत्।

**कालामुखमतम्----**

कालामुखमतं तपस्विनापस्तम्बेन प्रवर्त्तितम्। तस्य वैश्यमुनिः क्राथेश्वरो नाम शिष्य आसीत्। तस्य सम्प्रदायस्योद्भवः सम्भवतः काश्मीरेऽभवत्। तस्याचार्य सिद्धान्तपूजापद्धतीनां परिचयः कर्णाटक राज्ये कन्नडलिप्यालिखितेषु ११-१२ मशतवर्षीयेषु शिलालेखेषु प्राप्यते। तस्मात्प्रतीयते यदेतन्मतं लकुलीशप्रवर्तितेन पाशुपतमतेन युक्तं स्यात्। कालामुखसम्प्रदायोऽन्ततसतस्मिन् वीरशैवमतेऽन्तर्लीनोऽभवत् अद्यैतस्मिन्नेव प्रदेशे प्रचलति यत्र पूर्वं तत्सम्प्रदायः प्रसारित आसीत्।

**कापालिकमतम्----**

कापालिकमतं कियत्पुराणमस्तीति निश्चितुं न शक्यते परन्तु मध्ययुगेऽन्यमतानीव तदपि चतुर्दिक्षु प्रससार। सप्तमशतवर्ष मध्ये महाराष्ट्रे कापालिकसम्प्रदायोऽस्वीतिसाक्ष्यं प्राप्यते।

कापालिकमतस्य प्रवर्त्तको महाव्रती कुवेरो मन्यते। तस्योर्णोदरनामकः शिष्यः शूद्रजातिजातः। शक्तिसंगमतन्त्रे कापालिकमतगता (१) इन्द्रजाली (२) देवजाली, (३) रुद्रजाली, (४) विद्याजाली, तथा (५) सिद्धजालीति पञ्चभेदाः प्रोक्ताः।

कापालिक जनाः कपालं धृतवन्तः कपालेऽपि भोजनं कृतवन्त आसन्। तेषां मते कर्णिकारुचककुण्डल शिखामणि-भस्मयज्ञोपवीतमिति षण्मुद्राणं धारणान्मोक्षः प्राप्यते।

शिवपुराणवामन पुराणवायवीयसंहितादीनां मते चतुर्षु शैवमतेषु कापालिकमतन्यतममस्ति। उपर्युक्तानां चतुः शैवसम्प्रदायानां मध्येकाला मुखमतं कापालिकमत चावैदिकं मन्यत। शिवपुराणे पाशुपतागमा श्रौतागमाः प्रोक्ताः कामिकादिवातुलान्तं २८ सिद्धान्तागमाः स्वतन्त्राः मताः।

**द्वैताद्वैतशैवमतम्----**

उत्तरकाले यच्छैव सिद्धान्तो व्यकासयत स विशिष्टा द्वैतरूपमथवा द्वैताद्वैतरूपमगृह्णात्। अस्मिन् शक्तिविशिष्टः शिवो जगत्सृष्टिं करोति। द्वैताद्वैतवादिनि शैवदर्शने चत्वारः सम्प्रदायाः

समाविष्टाः वर्तन्ते।

(१) लकुलीशपाशुपतमतं, (२) श्रीकण्ठमतं, (३) वीरशैवमतं, (४) रसेश्वरमतं चेति।

१- लकुलीशपाशुपतमतम्---- लकुलीशपाशुमतं योगाचार्येण लकुलीशेनोपदिष्टाासीद्यः प्राचीनायां पाशुपत-परम्परायां नवीनां दृष्टिमुन्मिमेष। अस्य कालो द्वितीये शतवर्षे स्वीकृतः। एषलकुलीशः श्वेताद्द्रष्ट विंशतेः पाशुपतयोगाचार्या-णामन्तिमो योगाचार्य आसीत्। एते सर्वे योगाचार्याः शिवावतारा मन्यन्ते। प्रत्येकस्य चत्वारः शिष्या आसन्। लकुलीशस्य शिष्याणां नामानि---

(१) कौशिकः (२) गार्ग्यः (३) मैत्र्यः (४) कौरुषश्चेति।

लकुलीशस्योत्पत्तिर्विश्वरूपादासीत्। विश्वरूपः सोमशर्मणः उत्पपाद। सोमशर्माग्निशर्मणेऽग्निशर्माऽऽत्रेयोऽत्रितोऽत्रिश्च ब्रह्मणो मानसपुत्र आसीत्। लकुलीशप्रभृति विद्यागुरुपर्यन्तमष्टादशानां पाशुपताचार्याणां नामावलीत्थमस्ति।

(१) लकुलीशः, (२) कौशिकः, (३) गार्ग्यः, (४) मैत्र्यः, (५) कौरुषः, (६) ईशानः, (७) पारगार्ग्यः, (८) कपिलाण्डः, (९) मनुष्यकः, (१०) कुशिखः, (११) अत्रिः, (१२) पिङ्गलः, (१३) पुष्पकः, (१४) बृहदार्यः (१५) अगस्तिः, (१६) सन्तानः, (१७) राशीकरः, (१८) विद्यागुरुश्च।

तेषां मध्ये लकुलीशः पञ्चाध्यायीनाम पाशुपतसूत्राणां राशीकरश्च पञ्चाध्यायी भाष्यस्य रचयितास्ति। लकुलीशपाशुपतमतस्य समस्तमतिर्हरिदत्ताचार्येण विरचिताया गणकारिकाया अष्टश्लोकेष्वतिसंक्षेपे संगृहीतास्ति।

२- श्रीकण्ठमतम्---- श्रीकण्ठमतमुत्तरकाले विकसितं सिद्धान्तशैवस्य द्वैताद्वैतरूपमस्ति।

३- वीरशैवमतम्---- वीरशैवधर्मस्य संस्थापकाः पञ्चाचार्या मन्यन्ते- तेषा नामानि----

(१) रेवाणाराध्यो, (२) मरुलाराध्यः, (३) एकोरामाराध्य, (४) मल्लिकार्जुनो, (५) विश्वाराध्यश्चेति एते आचार्यः क्रमशः

(१) सोमेश्वर (२) सिद्धीश्वर (३) रामनाथ (४) मल्लिकार्जुन (५) विश्वनाथनामकेभ्यः।

शिवलिङ्गेभ्य अविर्भूता आसन् यानि शिवस्य सद्योजातावामदेवाघोर तत्पुरुषेशानाख्यमुखेभ्य उद्भूवुरिति कथ्यते। एते पञ्चाचार्याः प्रत्येकस्मिन्युगे स्वस्वलिंगादवतीर्यागतवन्तः सन्ति। कृतयुगे तु एकाक्षरो द्वयक्षरस्त्र्यक्षरश्चतुरक्षरः पञ्चाक्षरश्च शिवाचार्य्य इति नाम्ना, द्वापरयुगे रेणुको दारुको घण्टाकर्णो, धेनुकर्णो विश्वकर्णश्च शिवाचार्य नाम्ना गच्छन्ति।

इदं प्रसिद्धमस्ति यद्रेणुकाचार्यो धर्मप्रचारार्थः कर्णाटके रम्भपुरीनामकं पीठमस्थापयत्। तस्यशाखा रेणुकशाखोच्यते स वीरगोत्रीयाणामादिगुरुर्मतः। दारुकाचार्या उज्जयिन्यामुज्जयिनीनामकं पीठमस्थापयत्। तस्यशाखा दारुकशाखोच्यते। कलियुगीयो मरुलाराध्यो नन्दीगोत्रस्यादि गुरुरस्ति।

एको रामाराध्यो हिमालये केदारपीठमस्थापयत्। तस्य गुरुपरम्पराऽविच्छिन्नगत्याऽनादिकालतः प्रचलति।

पण्डिताराध्यः श्रीशैले श्रीशैलनामकं पीठमस्थापयत्। स धेनुकशाखाया वृषभगोत्रस्य चादि गुरुर्मन्यते। अस्य पीठस्य गुरुपरम्पराप्ययाहतगत्या चलति।

विश्वाराध्यः काश्यां काशीपीठमथवा ज्ञानसिंहासने नाम मठमस्थापयद्यदधुना जगम्बारी मठ नाम्ना प्रसिद्धमस्ति। एतन्मठमप्यतिप्राचीनमस्य च गुरुपरम्पराप्यक्षुण्यगत्या चलति। वीरशैवधर्मस्य पुनः स्थापना द्वादशेशतवर्षे कर्णाटक आराध्य सम्प्रदायिनो मादिराजनामकस्य ब्राह्मणो वसवनामकेन पुत्रेण वसवपुराणे चर्चिता।

वीरशैवसाहित्यस्य मूलस्त्रोतो अष्टाविंशत्यगया मन्यनते।

**४- रसेश्वरमतम्---**

माधवाचार्यः सर्वदर्शन संग्रहे रसेश्वर दर्शनस्योल्लेखं करोति। रस शब्दः पारदार्थकः। अयमेव पारद ईश्वरो यत् पारद एव जीवं भवसागरान्मोचयति-- यथोक्त रसारयन शास्त्रे---

"सागरस्य परं पारं दत्तेऽसौ पारदः स्मृतः" इति।

वस्तुतः पारदः शिववीर्यं तथा गन्धकः पार्वतीयो रजो मन्यते। उभयोः संयोगान्निर्मितस्य भस्मनः प्रयोगो मानवशरीराय दिव्यतां प्रददाति। पारदस्पर्शादयोऽपि स्वर्णतां गच्छति। वस्तुतो यावन्मनुष्य शरीरे दृढता न भविष्यति तावद् योगाभ्यासोऽसम्भवो योगाभ्यासस्य चाभोवमोक्षो न लभ्यते। एवं रसेश्वरदर्शनानुसारेण रस (पारद) स्वरूपेश्वर सेवानादृढं तथा शक्तिशालि शरीरं प्राप्य जीवो जीवन्मुक्तिं प्राप्नोति जरामरणभयाच्च सर्वथा मुक्तो भवति।

**अद्वैत शैवमतम्---**

अद्वैतवादिनः शैवदर्शनस्य चतुः सम्प्रदायाः विख्याताः-

(१) नन्दिकेश्वरमतं (२) प्रत्यभिज्ञा (३) क्रमः (४) कुलं चेति।

प्रत्यभिज्ञा स्पन्दशास्त्रे प्रत्यभिज्ञाशास्त्रे च विभक्ता। प्रत्यभिज्ञादिमतत्रयं काश्मीरशैव दर्शननाम्ना प्रसिद्धम्। एतेषां त्रयाणां सम्प्रदायानां स्वस्वपरम्परासाहित्यं तथा दार्शनिकाः

साधनागताश्च विशेषताः सन्ति।

उत्तरकालिकाः सम्प्रदायाः--- काश्मीरं शैवमतम् उत्तरकालिकस्य शैवदर्शनस्य प्रचारक्षेत्रं कश्मीरोऽभवदतस्तस्य नाम काश्मीरं शैवदर्शनमिति। काश्मीरस्य शैव दर्शनस्य प्रथमः प्रचारकस्त्रियाम्बकादित्यनामको दुर्वाससो मानसः पुत्र आसीत्। त्र्यम्बकायैव दुर्वासा मुनिर द्वैतवादिनीं शिक्षां ददौ जगति तत्प्रचारार्थम्। एषा परम्परा चतुर्दशपीढीपर्यन्तं चलतिस्म। एते शिष्याः सिद्धय उच्यन्तेस्म। पञ्चदश्यां पीढया मानसपुत्रै गुरुशिष्यक्रमो वभाञ्ज यतस्तत्प्रति निधिर्मानस पुत्रोत्पादनेऽसफल आसीत्। तस्य ब्राह्मण कन्यया सह विवाहात् संगमादित्य नामा पुत्रः समभवद्यं पितोपदेशं ददौ। ततः परं पितृपुत्ररूपेणैव गुरुशिष्यक्रमश्चलतिस्म।

एष सङ्गमादित्यः काश्मीरं भ्रमणं कृत्वा तत्रैवोवास, तच्च स्थानं तेरम्बामठिकानाम्नाप्रसिद्धमभवत्। संगमादित्यवंश परम्परायां क्रमशो वर्षा दित्योऽरुणादित्य आनन्दः सोमानन्दश्चोत्पेदुः। तदा प्रभृति पितृपुत्र क्रमभङ्गेन गुरुशिष्यक्रम आरभत। यथा---

(१) सोमानन्द (२) उत्पलदेव (३) लक्ष्मणगुप्तो (४) अभिनवगुप्तः (५) क्षेमराजादयः।

काश्मीर्यास्तान्त्रिक्याः परम्परायाः साहित्यस्य च प्रमुखमुपजीव्यमागमाः सन्ति ये श्रुतिवद्-- बोधात्मकाः शब्दात्मकाश्च मन्यन्ते। चतुःषष्ठिरभ्भेदशैवागमास्तस्य दर्शनस्य स्त्रोतः। येष्वागम ग्रन्थेषु तद्दर्शनं मुख्यत आधारितं तेष्वनेका अप्राप्या यथा--- ब्रह्मयामलं, दीक्षौत्तरं, कुलगह्वरो, नामकः सिद्धयोगीश्वरमतं, मालिनीविजयतन्त्रं, मातङ्गो, रत्नमाला, सारशासनं, सिद्धिशासनं, त्रिशिरो, योगसंचारश्च। ये आगम ग्रन्था उपलब्धा सन्ति तेषां मध्ये--- (१) मालिनीविजयोत्तरतन्त्रं, (२) स्वच्छन्दतन्त्रं, (३) परात्रिंशिका, (४) नेत्रतन्त्र, (५) मृगेन्द्रतन्त्रं, (६) स्वयमभुवतन्त्रं, (७) रुद्रयामलतन्त्रं, (८) विज्ञानभैरव, (९) आनन्दभैरव, (१०) उच्छुष्मभैरव, (११) नैरवासतन्त्रं च इति प्रमुखाः ग्रन्थाः।

प्रबन्धस्य विस्तरभयादत्र केवलं तान्त्रिकाचार्याणां नामानि उल्लिख्यन्ते---

(१) वसुगुप्तः (२) कल्लटः, (भट्टकल्लटः), (३) रामकण्ठः, (४) भास्कराचार्यः, (५) सोमानन्दो, (६)

उत्पलदेवः, (७) लक्ष्मणगुप्तः, (८) शम्भुनाथः, (९) अभिनवगुप्तः, (१०) क्षेमराजः, (११) योगराजः, (१२) मधुराजः, (१३) वरदराजः, अयमेव शिवसूत्रवार्तिकमलिखत् (१४) जयरथः, (१५) महेश्वरानन्दः, (१६) क्षितिकण्ठ आदयः।

प्रतिभिज्ञादर्शनं त्रिकदर्शनमप्युच्यते। तन्त्रे क्रमसम्प्रदायोऽपि वर्तते। क्रमदर्शनस्य विभिन्नानि नामानि सन्ति। परमतत्त्व प्राप्तये विकल्पसंस्कारो मोक्षसाधनमिति मननात् तद्दर्शनं क्रम इत्युच्यते। तदनुसारेणमोक्षो झटिति नोपलभ्यते अपितु क्रमेण प्राप्यते। परम्परानुसारेण क्रमदर्शनस्य प्रथम आचार्यः शिवो भैरवो आसीत्। अस्य प्रथमा श्रोत्रीच्छाशक्तिर्भैरवी आसीत्। क्रमस्य परम्पराद्वयमस्ति----

क्रमस्य द्वे परम्परे आस्तामिति प्रतीतम्। एका शिवं परमतत्त्वरूपममन्यत द्वितीयायां च काली कालसंकर्षिणी वा सर्वव्यापी परमतत्त्वमासीत्। प्रथमायाः परम्पराया अनुयायी सोमानन्द आसीत्। द्वितीयायाश्चाभिनव गुप्ता यः कालीं परा संवित्स्वरूपां मन्यते स्म।

क्रमसाधना शाक्तोपायान्तर्गता विद्यते। कुलसम्प्रदायेऽपि तान्त्रिकी परम्परा अस्ति।

कुलदर्शनं शाम्भवोपायोऽस्ति। अस्मिन्मातृकायाश्चक्र-पूजनस्य च प्रधानताऽस्ति। अस्मिन्मार्गे मद्यादिपञ्चमकाराणां सेवनं क्रियतेस्म किन्तु मद्यार्थी मदिरं न भूत्वा ब्रह्मरन्ध्र स्थितात्सहस्रदलकमलात्क्षरितः सुधारस इति।

साधारणतया या गुरुपरम्पराः परिचिताः सन्ति तेषु मार्गप्रवर्त्तकरूपेणादिगुरुर्भैरवोऽथवा स्वच्छन्दभैरव इति नाम गृह्णाति। किन्तु कुलमार्ग रूपधारायामादि गुरुरूपेण भैरवी मन्यते। अत एष सम्प्रदायो भैरव्या प्रवर्त्तितोऽस्ति।

सत्ययुगे कौलमार्गस्य प्रचारक खगेन्द्र आसीत्। तस्य विज्जाम्बानामिका पत्न्यासीत्। तयोर्वक्तस्तिविमलमामकौ पुत्रावास्ताम्।

त्रेतायुगे कौलस्य प्रचारक कर्म आसीत्। तस्य पत्न्या नाम मङ्गला शक्ति पुत्रयोश्च नाम्नी जैत्राविजिताविति।

द्वापरयुगे कुलप्रचारको मेष आसीत्। तस्य पत्न्या नाम काममङ्गला पुत्रयोश्च नाम्नी विन्ध्याजिताविति।

कलियुगे कुलामार्गस्य प्रचारको मीननाम्ना प्रसिद्धो मत्सयेन्द्रनाथ आसीत्। स कामरूपीठस्याधीश्वरस्तथा तुर्यनाथनाम्ना तान्त्रिकमण्डले परिचित आसीत्। तस्य पत्न्या नाम कुङ्कुणाम्बासीत्। तस्य (१) अमरनाथो (२) वरदेवः (३) चित्रनाथो (४) अलिनाथो (५) विन्ध्यनाथस्तथा (६) गुडिकनाथो नाम षट् पुत्रा आसन्।

**कलियुगस्य कौल परम्परा---**

(१) मत्स्येन्दनाथोऽथवा मीनः (पंचमं शतवर्षम्)।

(२) अमरनाथादयस्तस्य पुत्राः।

(३) उच्छुष्मादिहुलुहुलुपर्यन्तं दश गुरवः।

(४) निष्क्रियानन्दादिशिवानन्दपर्यन्तं चतुर्गुरवः (८-९ मं शत)।

(५) सुमति सोमदेवः शम्भुनाथोऽभिनवगुप्तश्चेति (दशमं शतवर्षम्)।

अग्रे मया शाक्तमतविषये किञ्चिदुल्लिखामि----

शाक्तमतानुयायिनः शक्तेरेव परमतत्त्वरूप उपासनां कुर्वन्ति। एषा संवित्स्वरूपाभगवती स्वान्तरे विद्यमानं जगद् बहिः प्रकटीकरोतीति शाक्तमतस्य मूलसिद्धान्तः। शाक्तसम्प्रदाये काल्यास्त्रिपुरायाश्च विशेषे स्थानमस्ति। क्रमदर्शने काली परतत्त्वमस्ति। त्रिपुरादर्शने (वामकेश्वर दर्शने) त्रिपुरानाम महासंवित्परब्रह्मस्थानीयास्ति।

**त्रिपुरासम्प्रदायः----**

त्रिपुरामतस्याथवा श्री विद्यामतस्य काश्मीरशैवमतेनाति घनिष्ठः सम्बन्धोऽस्ति।

**कादिहादिकहादिमतम्----**

तन्त्रराजतन्त्रेऽष्ट खण्डेषु चतुष्खण्डे पूर्वार्धे कादिमतं चतुष्खण्डे चोत्तरार्धे हादिमतं प्रतिपादितमिति शक्ति संगमतन्त्रे। कालीमन्त्रस्य प्रथममक्षरं ककार इत्यतः कालीसम्प्रदायः कादिमतनाम्ना प्रसिद्धः। सुन्दरी मन्त्रस्य प्रथमोवर्णो हकार इत्यतः सुन्दरीसम्प्रदायो हादिमतनाम्ना विख्यातः। ककारो ब्रह्मरूपो हकारश्च शिवरूपः।

**गौडसम्प्रदायः----**

सिलहट्टादिसिन्धुदेशपर्यन्तं गौडसम्प्रदायो मतः। हादिमतानुसारेण गौडसम्प्रदाये तारा कादिमतानुसारेण च काल्या उपासना जायते।

शाक्तमतस्याधारागमा चतुः षष्ठि तन्त्राणि सन्ति। वामकेश्वरो शास्त्रं, नित्याषोडशिकार्णव टीका, चतुः शतीशास्त्रमर्थरत्नावलीनामिकालित्याषोऽशिकार्णवटीका, स्वच्छसंग्रहो नित्यातन्त्रं, तन्त्र राजतन्त्रं (कादिमतं) शक्तिसंगमतन्त्रमिति शाक्तमतस्य प्रमुखानि शास्त्राणि।

**वैष्णवमतम्----**

**वैष्णवसम्प्रदायाः त्रिविधाः----**

(१) वैखानसमतम्

(२) पाञ्चरात्रमतम्।

(३) भागवतमतं चेति।

एते सम्प्रदायाः तत्तत्क्षेत्रे प्रचलति। अधुनोपलब्धाः सर्वं वैष्णवसम्प्रदाया वैखानस पाञ्चरात्र भागवतनामकानां त्रिविधवैष्णवागमानां मध्ये कमप्येकमनुसरन्तस्तं वेदसमयेव प्रमाणं मन्यते। अतो भगवतादिषु गन्थेषु वैदिकी तान्त्रिकी चेति द्विविधाश्रुतिश्चर्चिता।

स्मार्तसम्प्रदायाः----

स्मार्ततन्त्रपरम्परामूलं पुराणेषूयपुराणेषु चास्ति तत्र वैदिकवाङ्मयस्यागमिक परम्परायाश्चाधिकः प्रभावो दृश्यते। स्मार्ततन्त्रपरम्परायां पञ्चदेवोपासना दशमहाविद्योपासना च मन्यते। महाकालसंहितायां पञ्चायतनशब्दस्यार्थः तथा प्रोक्तः-

**गणेशश्चापि सूर्यश्च विष्णुरुद्रस्तथैव च ।**
**पूजयेन्मध्य ईशानीं पञ्चायतनमीदृशम् ।।०।।**

स्मार्तसम्प्रदायाः शक्तिसंगमतन्त्रे विशेषेण वर्णिता।

---

१- गुह्यकाली खण्डे १२।२७८

अस्मिन् चतुर्थोऽध्याये तन्त्राणां संक्षिप्तो परिचयः दत्तः यदि सम्यग्रूपेण वर्णनं कतु चेत् तर्हि अस्याध्यायस्य विस्तारो भवति यतः प्रबन्धस्यापि विस्तारो भविष्यतीति हेतो संक्षिप्तमेव परिचयमुचितं प्रतिभाति मन्यते।

## *पञ्चमोऽध्यायः*

**देवीभगवतोक्त मणिद्वीपवर्णनापेक्षया तन्त्रेषु किं वैशिष्ट्यमिति परिचिन्तनम्।।**

श्रीमद्देवीभागवतस्य कर्ता महामुनि व्यासः देवीभागवते द्वादशस्कन्धे दशमेऽध्याये ''मणिद्वीपस्य'' वर्णनं कृतमस्ति, तस्य द्वीपस्याध्ययनेन जगदम्बायाः स्थानस्य ज्ञानं भवति। जगदम्बा कुत्र विराजते, तस्य स्थानस्य किं महत्त्वम् तत्सर्वं तान्त्रिकदृष्ट्या महत्वपूर्णं विद्यते।

**ब्रह्मलोकादूर्ध्व भागे सर्वलोकोऽस्ति यः श्रुतः ।**
**मणिद्वीप स एवास्ति यत्र देवी विराजते[1] ।।०।।**

ब्रह्मलोकस्योर्ध्वभागे यः सर्वलोकः श्रुतः, स एव मणिद्वीपो वर्तते यत्र भगवती जगदम्बा विराजमानाः सन्ति। सर्वलोकादधिको श्रेष्ठ अस्मात् कारणाद् अस्य लोकस्य नाम ''सर्वलोकः'' वर्तते। एतत् समानं त्रैलोकेषु नहि कश्चिद्

१- श्रीमद्देवीभागवत १२स्क० १०अ०।

सुन्दरधाम वर्तते। जगद्धेत्वर्थमयं छत्रस्वरूपमस्ति, तत्र सांसारिकतापस्य प्रभावः न भवति। प्राचीनकाले पराम्बा अयं सर्वलोकः मासेच्छाया कल्पितः। ब्रह्माण्डानां तु छायाभूतं तदेवास्ति। मणिद्वीपस्य चतुर्दिक्षु सुधोदधिः वर्तते। मरुत्संधटनोत्कीर्ण तरङ्गानि तस्य शोभां वर्द्धयन्तिस्म। रत्नमयवालुका मत्स्यादेवं शंखात् परिपूर्णो वर्तते। समुद्रस्य पश्चात् लौहमयधातुनिर्मितः गगनचुम्बी प्राकारः वर्तते सोहि प्राकारः सप्तयोजन विस्तीर्णः महान् वर्तते। नायुद्धविशारदाः मोदमानाः रक्षकाः तत्र निवसन्ति, अत्र सर्वत्रैवानन्दस्य साम्राज्यमस्ति। अस्मिन् परकोटे चत्वारि द्वाराणि सन्ति। तस्मिन् परकोटे अनेके देवीभक्ताः वसन्ति। भगवत्याः जगदम्बायाः दर्शनार्थं ये देवगणा अत्र आगच्छन्ति तेषां गणानां निवासार्थमंत्र स्थानमस्ति। तेषां देवानां वाहनानि विमानानि च कृते अयं स्थानः सुरक्षितो विद्यते। मिष्टाारिपरिपूर्णसरांक्षि च पदे पदे वर्तन्ते। रत्नमयवृक्षेभ्यः सुशोभिताः अनेकानि सुन्दरतमानि उद्यानानि सन्ति। अग्रे अस्य (सर्वलोकस्य) वर्णनं श्लोकैः विधास्यते----

**वाटिका विविधा राजन् रत्नद्रुम विराजिताः ।**
**तदुत्तरं महासार धातुनिर्मित मंडलः[१] ।।०।।**

१- देवीभागवत स्क० १२ अ० १०। श्लोक १७

शालो परो महानस्ति गगनस्पर्शियच्छिर[1] ।
तेजसा स्याच्छतगुण पूर्वशालादायं परः ।।०।।
गोपद्वार सहितो वहुवृक्ष समन्वितः ।
या वृक्ष जातयः सन्ति सवास्तास्तत्र संति च ।।०।।
निरन्तरं पुष्पयुताः सदाफल समन्विताः ।
नवपल्लव संयुक्ता पर सौरभ संकुलाः ।।०।।
पनसा बकुला लोध्रा कर्णिकाराश्च शिंशवा ।
देवदारुकाञ्चनारा आम्राश्चैव सुमेरवः ।।०।।

कांस्यनिर्मित प्राकारस्य पश्चात् ताम्रनिर्मित प्राकारमस्ति। तस्य प्राकारस्याकारः चतुरस्त्रः उन्नत्याः शतयोजन विस्तीर्णः विद्यते, तत्र कल्पवृक्षस्यैकाकांचनाभानि प्रकाशन्ते।

पत्राणि कांचनाभानि रक्तबीज फलानि च[2] ।
दशयोजन गंधो हि प्रसर्पति समन्ततः ।।०।।

पत्रैः स्वर्ण आभा प्रसर्पति बीजानि फलानि च रत्नसदृशानि सन्ति। दशयोजनविस्तीर्णं तेषा गन्धः प्रसर्पयति। तत्र वसन्तः पुष्पनिर्मितसिंहासनोपरि विराजते, वसन्तस्य द्वे स्त्रियौ वर्तेते तयोः नाम ''मधु श्री'' ''माधवश्री वर्तेते। तत्र

१- देवीभागवत स्क० १२ अ० १०। श्लोक १८-२१ पर्यन्तम्।
२- देवीभागवत स्क० १२ अ० १०। श्लोक ३६।

एका दिव्यावाटिका चतुर्दिक्षु मधुधारां प्रवहति।

ताम्र निर्मित प्राकारं पश्चात् शीशप्राकारः प्रसिद्धोऽस्ति---

''ताम्रशालादुत्तरत्र सीसशालः प्रकीर्तितः।''

अस्य प्राकारस्योर्ध्वभागः सप्त योजनविस्तीर्णः विद्यते। द्वयोः शालयोः मध्ये संतानवाटिका वर्तते, तस्याः वाटिकायाः पुष्पाणां सुगन्धानि दशयोजन पर्यन्तं प्रसरन्ति। तस्याः वाटिकायाः स्वामी ''ग्रीष्मऋतुः'' भवति। तस्य द्वे भार्ये स्तः, एका ''शुकश्री'' द्वितीया ''शुचिश्री'' वर्तेते। अनेकाः सिद्धगणाः तथा देवाः तत्र निवसन्ति।

''शीशशालादुत्तरत्राप्यारकूटमयः शुभः''

शीशशालस्याग्रे सुन्दरपीतलद्वारा निर्मितः एकः प्रकारः विद्यते। तस्योर्ध्वं सप्तयोजनमस्ति। अस्मिन् शीलशालस्य परकोटे वर्षाऋतौः द्वादशदेव्यः निवसन्ति, तान्त्रिकाः वर्षाऋतौ आसां पूजां कुर्वन्ति। तासो नामानि इमानि सन्ति नभः श्रीः, नमस्यश्रीः, स्वरस्या, रस्यामालिनी, अम्बादुलां, निरत्नी

अभ्रमन्ती, मघयन्तिका, वर्षयन्ती, चिबुणिका, वारिधारा, सम्मता च।

आरकूटपरकोटस्याग्रे सप्तयोजनविस्तीर्णः पञ्चलौहात्मकः शालः (परकोटः) वर्तते अस्य मध्ये मन्दारनामकदिव्यवृक्षोभ्यः युक्ता एका वाटिका विद्यते। अनेकपुष्पेभ्यः लताभ्यश्च परिव्याप्ता इयं वाटिका विविध पल्लवेभ्यः अनुपमा शोभा प्राप्नोति। पवित्रात्मा--- "शरद ऋत्तुः" अत्र अधिष्ठाता संप्रोक्तः। तस्य द्वे भार्ये स्तः, (१) "इषुलक्ष्मी" (२) "उर्जलक्ष्मी" अनेकाः तान्त्रिकाः (सिद्धपुरुषाः) साङ्गनाः सपरिच्छदाः तत्र निवसन्ति।

अस्य लौहात्मक षट्परकोटस्याग्रे सप्तमः रजतस्य परकोटः विद्यते तस्य दैर्ध्यं सप्तयोजन मस्ति। वृहद् शिखर तस्य शोभां वर्धयति। अस्य मध्यभागे पुष्पेभ्यः गुच्छेभ्यश्च सम्पन्नः रमणीयकः पारिजातस्य उद्यान अस्ति। तान्त्रिकाः तस्य पारिजातस्य पुष्पाणि देवीयज्ञे उपयोगे कुर्वन्ति तथा समस्तगानामपि परमप्रसन्नं कुर्वन्ति। महान् हेमन्ततौं अस्य परकोटस्य स्वामी। अस्य हेमन्ततौः द्वे शक्ती स्तः यस्याः नाम "सहश्री" "सहस्यश्रीश्च" वर्तेते। भगवत्याः पराम्बायाः कृच्छ्राादिव्रतस्य उपासनाकर्तारः सिद्धपुरुषाः तान्त्रिकाः तत्र निवसन्ति, ते निरन्तरं पराम्बाया स्तुतिं कुर्वन्ति।

राजतपरकोटस्य पश्चात् सततसुवर्णैः निर्मितः अष्टसंख्यकः सौवर्णशालः विद्यते-----

**रौप्यशालमयादग्रे सप्तयोजन दैर्ध्यवान् ।**
**सौवर्णशालः संप्रोक्तः तप्तहाटककल्पितः[1] ।।०।।**

अस्य दीर्घासप्तयोजनविस्तीर्णा विद्यते तस्मिन्मध्ये कदम्बस्यैका पुष्पवाटिका अस्ति। शिशिरर्तौः आदरणीय देवाः तत्रागत्य व्यवस्थां कुर्वन्ति ''तपः श्री'' ''तपस्य श्रीः'' प्रतिष्ठिते द्वे भार्ये तत्र स्तः। सिद्धपुरुषाणां तत्र निवास स्थानमस्ति, भगवत्याः प्रसन्नार्थं गा एवं भूमिं दान कुर्वन्ति ते सिद्धसाधकाः। तान्त्रिक दृष्ट्या स स्थानः श्रेष्ठतमो विद्यते, अतः तान्त्रिकाः तत्र भगवत्या आराधनां तान्त्रिकदृष्ट्या कुर्वन्ति। हिरण्मयप्राकारस्याग्रे कङ्कुभसमानमरुणवर्णयुक्तं पुष्परागमणेः रचितं सप्तयोजनविस्तीणमेकं परकोटमस्ति। तत्रतः भूमिः, बनम् , उपबनञ्च पखराजस्य सं प्रतीतं भवति अग्रे श्लोकैः वर्णयामि----

१- श्रीमद्देवीभागवत १२।१०।६५।

स्वर्णशालमयादग्रे मुनियोजन दैर्ध्यवान् ।
पुष्परागमयः शालः कुङ्कुमारुणविग्रहः ।।०।।
पुष्परागमयी भूमिवनान्युपवनानिं च ।
रत्नवृक्षालवाश्च पुष्परागमयास्मृताः ।।०।।
प्राकारो यस्य रत्नस्य तद्रत्नरचिता द्रुमाः ।
वनभूः पक्षिणश्चैव रत्नवर्णजलानि च ।।०।।
मण्डपा मण्डपस्तभ्भा सरांसि कमलानि च ।
प्राकारे तत्र यद्यत्स्यात्तत्सर्वं तत्समं भवेत् ।।०।।
परिभाषेयमुद्दिष्टा रत्नशालादिषु प्रभो ।
तेजस्या स्याल्लक्षगुणः पूर्वशालात्परो नृप ।।०।।
दिक्पाला निवसंत्यत्र प्रतिब्रह्माण्ड वर्तिनाम् ।
दिक्पालानां समष्ट्यात्मरूपाः स्फूर्जद्वरायुधाः[1] ।।०।।

अस्य मणिद्वीपस्य पूर्वदिशि ऊर्ध्वशिखरेण युक्त अमरावतीपुरी अस्ति। भिन्नान्युपवनानि तस्यां शोभां वर्धयन्ति। सा पुरी देवराजेन्द्रस्यास्ति। स्वर्गस्य या शोभा वर्तते-- तस्याः शोभाया अधिकाशोभा अस्या अमरावत्या अस्ति। ततत्रः शत् कतुः प्रतापी इन्द्रः ऐरावतोपरि आरुहय बज्रेणयुक्तः देवसेनया सह शोभां प्राप्नोति। इन्द्रस्य पत्नी शची अपि देवङ्गनाभ्यः सह सम्पन्नो भूत्वा तत्र सुशोभिताः भवन्ति।

१- देवीभागवत १२।१०।

मणिद्वीपस्याग्निकोणे अग्नेः समानं प्रज्वलितो ब्रह्मपुरी अस्ति। स्वा, स्वधाभ्यां सह अग्निदेवः तत्र विराजते।

मणिद्वीपस्य दक्षिणदिशि यमराजपुरी वर्तते, चित्रगुप्तपुरोगमैः महाभटैः सह यमराज विशालदण्डं धारयित्वा तत्र विराजन्ते।

नैर्ऋत्यकोणे राक्षसानां पुरी कथ्यते।

पशिचिमदिशायां पाशधारी प्रतापवान् राज वरुणः विराजते।

मणिद्वीपस्य वायव्यकोणे वायुलोकः वर्तते, तत्र वायुदेव विराजते। प्राणायामे प्रवीणः सिद्धयोगीभ्यः परिवृतः वायुदेवः ध्वजां नीत्वा शोभां प्राप्नोति।

मणिद्वीपस्योत्तरदिशायां यक्षानां महान् लोकः विद्यते। तत्र यक्षानां स्वामी कुवेरः ऋद्धि वृद्धि प्रभृतिशक्तिभिः सह तथा नवनिधिभिः युक्तोभूत्वा विराजतेतमाम्।

मणिद्वीपस्य ईशानकोणे रुद्रलोकः कथ्यते, अमूल्य-रत्नेभ्यः चित्रित अस्मिन् लोके प्रधानदेवः रुद्र अत्र निवसन्ति, अस्य क्रोधमयो विग्रहः प्रज्वलित नेत्राभ्यां सम्पन्नोऽस्ति। अग्रे श्लोकै अस्य वर्णनं विधेयम्----

**स्फूर्जधनुर्वामहस्तोऽधिज्यधन्वभिरावृतः ।**
**स्वसमानैरसंख्यात रुद्रैः शूलवरायुधैः ।।०।।**
**विकृतास्यैः करालस्यैर्वमद्वह्निभिरास्यतः ।**
**दशहस्तैः शतकरैः सहस्त्रभुज संयुतैः ।।०।।**
**दशापादैर्दशग्रीवै स्त्रिनेत्रैरुग्रमूर्तिभिः ।**
**अन्तरिक्षचरा ये च ये च भूमिचराः स्मृता[१] ।।०।।**

ईशान दिशायाः स्वामी अयं अतः ईशान नाम्ना प्रसिद्धो वर्तते। अत्र पर्यन्तं मया मणिद्वीपस्य वर्णनं विधेयमग्रे अस्य मणिद्वीपस्य तान्त्रिकदृष्ट्या किमस्ति, इति विचारणायां शक्तिपूजा यद्यत्र भविष्यति तस्य महत्वमद्भुतं भविष्यति, परन्तु तस्य स्थाने मानवाः कथं गन्तुं शक्यते इति विचारणीयः प्रश्नः उदेति। अत अस्माकं विचारे इदमायाति यत् तत्र रुद्रादयः ये देवाः विराजन्ते ते एव शक्तेः पूजा कर्तुं समर्थाः सन्तरिति।

---

१- देवीभागवत १२।१०।९३-९५।

यद्यपि हिन्दूनां समस्तसाधनायाः कुञ्जिका ''तन्त्र'' एवास्ति, यदि मानवाः मणिद्वीपस्य स्थाने गन्तु शक्येत् तर्हि तन्त्रज्ञाः पूजां तान्त्रिकदृष्ट्या भविष्यतीति नास्ति सन्देहलेशः विद्यते। सर्वेषां सम्प्रदायानां सर्वप्रकारैः साधनायाः गूढरहस्यं तन्त्रशास्त्रे एव निहितमस्ति। तन्त्रशास्त्रः केवलं शक्तिउपासनाया एव प्रधान अवलम्बनं नास्ति, अपितु साधनानामेकमात्रमाश्रयो-ऽस्ति। अस्मिन् तन्त्रशास्त्रे स्थूलतमसाधनप्रणाल्यात् अतिगुह्यमन्त्रशास्त्रं तथा गुह्यतर योगसाधनादिसमस्तक्रिया-कौशलानां सविस्तरं वर्णनं विद्यते। तन्त्रान्तरगते दार्शनिकतत्त्वमपिदुर्बोध्यं नास्ति परन्तु गहनाध्यनस्यावश्यकता वर्तते येनाध्ययनेन तन्त्रशास्त्रे प्रवेशो सुलभो भविष्यति, अन्यथा तन्त्रोक्तसाधनजाले प्रवेशप्राप्तकरणं सहजसाध्यं नास्ति।

येन प्रकारेण मानवानां प्रकृतिः सात्त्विकी, राजसी, तामसी भेदेन त्रिप्रकारा अस्ति तथैव तन्त्रशास्त्रमपि सात्त्विकं, राजसं, तामसं, भेदेन त्रिप्रकारो वर्तते। तथैव अस्य तन्त्रशास्त्रस्य साधनप्रणालीरपि गुणभेदेन त्रिप्रकारेण व्याख्यायित अस्ति। यस्य येन प्रकारेण रुचिः भवेत् तदनुसारेणैव साधनपथं गृहीत्वा साधनकरणेन स जीवनं कृत्यकृत्यं कर्तुं शक्यते। शक्तिः येन प्रकारेण देवस्वभावः देवीगणयुक्तजीवानां जननीरूपा अस्ति, तथैव असुराणामपि जननी विद्यते। अस्मादेव कारणात्

मानवाः, देवाः, तथा असुरा एते सर्वे तस्यामुपासनायां प्रवृत्ताः भवन्ति। एते सर्वे स्वस्वभावानुसारेण उपासनायाः प्रणालीमवलम्बनं कुर्वन्ति। तेषां साधनाफलमपि साधनायाः प्रकृत्यानुसारेणैव प्राप्तुं भवति। आस्मात् कारणादेव शास्त्रे द्वे प्रकारे साधन प्रणाली उच्येते।

अस्मिन् भारतवर्षे वेदानामनुसरणं कुर्वन्ति जनाः। ते पञ्चोपासनासम्प्रदाय विभक्ताः सन्ति----

(१) गाणपत्यम् , (२) सौरः, (३) शाक्तः, (४) वैष्णवः, (५) शैवः। यद्यपि एते सर्वे जनाः, देवाः असुराश्च पृथक् पृथक् देवानामुपासकाः न सन्ति, अपि तु एक एव विश्वतोमुखः भगवतः पृथक् पृथक् पञ्चभावेषु उपासनां कुर्वन्ति। अतः इमे सर्वे देवाः तथा देवीषु भेदकल्पना कर्तुं नोचितं वर्तते। यथा पद्मपुराणे भगवतो निगदितम्----

**सौराश्च शैवगणेशा वैष्णवा शक्तिपूजकाः ।**
**मामेव ते प्रपद्यन्ते वर्षाम्भः सागरं यथा ।।०।।**

एकोऽहं पञ्चधा भिन्नः क्रीडार्थं भुवनेऽखिले। येन प्रकारेण वर्षायाः जलं चतुर्दिक्षु भूत्वा समुद्रे एव पतति तथैव गाणपत्याः

शैवाः सौराः वैष्णवाः तथा शाक्ताः सर्वे आगत्य मयि एव प्रविशन्ति। अहमेव अखिले भुवने क्रीडार्थं पञ्चधा अस्मि। अस्माद्धेतो साधकप्रवरः पुष्पदन्तः कथयति----

**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति।**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।**
**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेकोगम्यस्त्वमसि पयसामर्णव इव ।।०।।**

अस्मात् कारणादेव शास्त्रः जीवमुपदिशति----

**यो ब्रह्मा स हरिः प्रोक्तो यो हरिः स महेश्वरः ।**
**या काली सैव कृष्णः स्याद् यः कृष्णः सैव कालिका ।।**
**देवदेवीं समुद्दिश्य न कुर्यादन्तरं क्वचित्**
**तत्तद्भेदो न मन्तव्यः शिवशक्तिमयं जगत् ।।०।।**

श्रीमद्भागवतस्य चतुर्थस्कन्धेऽप्यस्ति यत्----

**त्र्यणाणामेकभावानां यो न पश्यति वैभिदाम् ।**
**सर्वभूतात्मनां ब्रहमन् स शान्तिमधिगच्छति ।।०।।**

त्रिषु भावेषु यः कश्चिदप्यभावं पृथग् न ज्ञायन्ते, सैव तस्य सर्वभूतात्मनः रूपे दर्शनं कर्तुं शक्यते। तदैव स शान्तिमधि-गच्छन्तीति।

अनेन प्रकारेण यद्यपि पञ्चदेवाः भगवत एव विभिन्नस्फुरणमात्राणि सन्ति तथापि मानवः स्वयमेव उपास्यदेवानां ग्रहणं कर्तुं न शक्यते यदि चेत् गृह्यते तर्हि नोचितं भवति। शास्त्रविधिनानुसारणैव सर्वं कार्यं कर्तव्यं येन कार्यस्यसिद्धि र्भवति, यद्यप्युचितं तु इदमस्ति यत् सद्‌गुरुः द्वारा सर्वं ज्ञात्वा तदैवोपासना कर्तव्यम् , यतो हि सद्‌गुरु एव जीवस्यप्रकृतेः विचारं कृत्वा तस्य उपास्य देवतायाः निर्देशं कर्तुं शक्नोति। भिन्न भिन्न मनुष्याणां येन प्रकारेण भिन्ने भिन्ने रसे आसक्तिः भवति, तथैव जीवस्यापि प्राक्तनकर्मणि तथा स्वभावस्यवशे भिन्न भिन्न देवेषु आसक्तिः भवति। स्व स्व स्वभावानुसारेणैव कश्चिद् जीवस्य पुरुषदेवतां प्रति, कश्चिद् स्त्री देवतां प्रति स्वाभाविकी प्रवृत्तिः भवति। एतेषां सर्वेषां वार्तानां विचारं न कृत्वा स्वयमेव यः नामजपं वा साधनां कुर्वन्ति ते शुभफलं न प्राप्नुवन्ति। तन्त्रशास्त्रे त्वस्य विषयस्य बहुविचारमस्ति तथा सिद्धान्तानां विशदवर्णनं विद्यते। तन्त्रस्य मतानुसारेण देव्याउपासना एव एकमात्रं शक्ते उपासना नास्ति अपि तु गाणपत्यं, सौरं, वैष्णवं शैवं तथा शाक्तं एते सर्वे शक्ति उपासकाः सन्ति। पुरुषः निर्गुण अस्ति अतः निर्गुणस्यापासना न भवति, यद्यपि उपास्यदेवः पुरुषः भूतेसत्यपि वास्तविके तत्रापि तस्यशक्ते एव उपासना भवति। शक्तिरेव अस्माकं ज्ञानस्य विषयो भवति। शक्तिमान् अथवा पुरुषः

ज्ञानातीतः सत्तामात्रमस्ति, स कस्मिंश्चिदपि समये कस्यापि बोधस्य विषयो न भवति। वेदेषु तन्त्रेष्वपि च ब्रह्मणं सच्चिदानन्द-मुच्यते। अस्मिन् सदंश एव पुरुषभावमथवा निर्गुणभावमस्ति तथा चित् एवुं आनन्दांश एव गुणयुक्तभावमर्थात् प्रकृतिरस्ति अस्याः प्रकृतिद्वारा एव पुरुषस्य परिचयं मिलति। सांख्यदर्शनस्तु पुरुष एवं प्रकृतेः विचारं करोति। सांख्यमतेन दुःखस्य अत्यन्तं विनाशमेव मुक्तिमुच्यते। सुखदुःखादयः बुद्ध्यादि स्वभावाः सन्ति। स्वभावस्तु केनापि प्रकारेण नष्टं न भवितुं शक्नोति, अतः बुद्धपादतिरिक्तं काचिदपि स्वीकारं न करणेन दुखाःदयेन मुक्तिलाभमसंभवमस्ति। अस्माद्धेतोः बुद्धादतिरिक्तं सुखदुःखादि-रहितं एकमतिरिक्त वस्तुमथवा आत्मानं स्वीकारं कर्तव्यम्। अयमात्मा एव सुखदुःखादिरहितं निर्गुणं पुरुषमस्ति।

बुद्ध्यादस्य सुखदुःखादिधर्माः पुरुषे आरोपिताः भवन्ति। अस्य आरोपिते सुखदुःखादि धर्मस्यापगते जाते सति एव मुक्तिलाभो भवति। बुद्ध्यादय अचेतनपदार्थाः सन्ति, चेतनस्य सान्निध्येन अस्य प्रवृत्तिः दृष्टिगोचरी भवति। इदं चेतन मधिष्ठाताऽपि पुरुष अस्ति। समस्त जडपदार्थाः भोग्यपदार्थाः सन्ति, परन्तु भोक्तां विना भोग्यः सिद्धो न भवति। भोग्य पदार्थमात्रस्यानुभवं भवति, अतः यो हि अनुभवं करोति अथवा भोगं करोति स एव पुरुषोऽस्ति।

सांख्यकारिकायां पुरुषस्य सम्बन्धे उक्तम्---

**तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च[1] ।।०।।**

त्रिगुणादि विपरीतधर्माः सन्ति----

अत्रिगुणत्व, विवेकित्व, अविषयत्व, असाधारणत्व, चेतनत्व तथा अप्रसवधर्मित्वञ्च। पुरुषचेतनः तथा अविषयत्वमस्ति, अतः स साक्षी एवं द्रष्टा अस्ति। यस्योद्देशेन यान् प्रकृतिशब्दादि विषयाणां दर्शनं कारयति सः पुरुष एव साक्षी। अचेतन विषयार्थं विषयस्य प्रदर्शनं न कर्तुं शक्यते, अतः पुरुषः विषयस्यातिरिक्तं साक्षीस्वरूपमस्ति। पुरुषे गुणत्रय-स्याभाव वर्तते अतः सुखदुःखादयः तस्मिन् पुरुषे न स्थितः, सुखदुःखादयस्तु पुरुषे नास्ति अतः तं कैवल्य लाभो भवति। इदं कैवल्यं पुरुषायप्रयत्नसाध्यो नास्ति अपि तु स्वभाव सिद्ध अस्ति। पुरुषः त्रैगुण्यरहित अतः मध्यस्थ अपक्षपाती वर्तते। तं सुखे न तृप्ति र्भवति, दुःखे द्वेषो न भवति, सविवेकी अस्ति, स अप्रसवधर्मी विद्यते अतः कर्त्ता नास्ति।

---

१- सांख्यकारिका, का० १९।

उपर्युक्त युक्तया चेतनः कर्त्ता नास्ति अयं सिद्धोजातः। अतः चैतन्यरहितो 'महत्' प्रभृतिपुरुषस्य सान्निध्येन चेतनस्य समानं भवति। तथा विकाररहितः उदासीनः पुरुषः 'महत्' बुद्ध्यादस्य कर्तृत्वे कर्त्तारः सदृशो भवति। यथा----

**तस्मात्तत्संयोगादचेतनं चेतनादिव लिङ्गम् ।**
**गुणकर्तत्वे च तथा कर्त्तेव भवत्युदासीनः[१] ।।०।।**

अनेन प्रकारेण प्रकृतिपुरुषयो संयोगेन चराचर विश्वमुत्पन्नमभूत्। गीतायां भगवतः कृष्ण उच्यते यत्----

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञयोसंयोगात्तद्विद्धि भरतर्षभ[२] ।।०।।**

भरतर्षभ! ये केचित् स्थावरजङ्गमान्युत्पन्नानि भवन्ति तानि सर्वाणि क्षेत्रक्षेत्रज्ञयोः संयोगेन उत्पन्नानि भवन्ति तद् विद्धि= अर्थात् ज्ञातय।

---

१- सांख्यकारिका- का० २०।

२- श्रीमद्भगवद्गीता अ०१३। श्लोक २६।

सांख्यमतानुसारेण चेतनः निर्विकारः कूटस्थः पुरुषः कश्चित् कार्यं नहि कर्तुं शक्यते। यद्यपि बुद्धिः क्रियाशक्तिविशिष्ट अस्ति तथापि जड अस्ति, जडस्तु कर्ता न भवितुं शक्नोति। उभयो मिलिते सत्यपि कार्यक्षमौ भवतः। प्रकृतिः पुरुष उभयमपि अनादिः, तथा अस्य संयोगः अनादिकारणात् इदं जगतलीला अनादिकालादागच्छति। पुरुषं विना प्रकृतेः परिणामः बुद्धपादेः ज्ञानं न भवति तथा प्रकृतिं विना पुरुषस्य मुक्तिरपि न भवति।

''पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य'' प्रकृत्यासह संयुक्तो भूत्वा पुरुषः वद्धो भवति, वृद्धावस्थायां विविध सन्तापेभ्यः क्लिष्टो भूत्वा सः मुक्ते उपायमन्वेषयति। परन्तु पुरुषाय इदं दुःखग्रहणाय हेतु किम्। अस्योत्तरं ''पुरुषस्य अज्ञानम्'' इति कथयितुं न शक्यते। अयं संयोगस्तु अनादिं अस्ति तत्तु कथं पुरुषः अनादिकालात् अज्ञाने अस्ति। विज्ञानभिक्षव उच्यन्ते यत्--- अस्य संयोगस्य भूते सत्यपि पुरुषः विकारीनास्ति। प्रकृतेः कार्यं यदा पुरुषः पश्यति तदा भेक्तृभोग्य सम्बन्धो भवति, अए एव यदा प्रकृतिः भोग्या भवति तदा तां पुरुषस्यापेक्षा भवति। तथा यदा प्रकृति अनादि अस्ति---

**''प्रकृतिं पुरुषञ्चैव विद्ध्यनादि उभावपि''**

तदा अनादिभोग्याप्रकृतेः भोक्तार अपि अनादिभवितु मनिवार्यमस्ति, अतः उभयोः संयोगयो इदमेवकारणमस्ति। परन्त्वयं प्रश्न उदेति यत् पुरुषप्रकृत्योः भोक्ताभोग्य सम्बन्ध अनादि अस्ति तदा तस्य अन्यप्रकारस्य प्रवृत्ति अर्थात् मुक्तेः इच्छा कथं भवति। सांख्यशास्त्र अत्र कथयति यत् बुद्धिः तथा पुरुषभेदस्य साक्षात्कारं जाते सत्यपि मुक्तिः भवति इदमेव ज्ञानमस्ति। अतः सांख्यमतेन दुःखनिवृत्तेः एकमात्रमुपायं ज्ञानमेव अस्ति।

**''तद्विपरीतः श्रेयान् व्यक्ताव्यक्त विज्ञानात्''**[१]

व्यक्त विकृतिः, अव्यक्त प्रकृतिः, तथा 'ज्ञ' पुरुषः अस्ति। शास्त्रेऽन्यान्योपायाः सन्ति परन्तु ते सर्वे उपायाः पापादिदोषेन दूषिताः सन्ति, एताभ्यां विपरीताः ये सन्ति ते पापादिदोषदूषिता न सन्ति, अतः प्रकृतिपुरुषभेदस्य साक्षात्कारएव श्रेष्ठमुपायमस्ति।

सांख्यमतेन पुरुषसंयोगद्वारा अचेतनबुद्ध्यादिचेतनस्य समानाः भवन्ति, तथा बुद्ध्यादिसंयोगेन अकर्त्तापुरुषः कर्तसमानं भवति। सांख्यस्य पुरुषप्रकृतिः कश्चिदपि पारम्परिक साहाय्यं विना स्वयं संसारस्य रचनायां समर्थौ न भवतः। परन्वस्मिन् भगवदिच्छायाः कश्चित् प्रयोजनं न भवति। परन्विदं तु तन्त्रे स्वीकृतो न वर्तते। सांख्यस्येदं मतं उपनिषदं तथा पुराणसम्मतमपि न वर्तते। प्रकृति तथा पुरुषं अनयोः मध्ये कश्चित चरमपदार्थो न मन्यते। श्वेताश्वतरोपनिषदे वर्तत् यत्----

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः।[१]

क्षरस्तु प्रधानः (प्रकृतिः), अक्षर अमृतः (पुरुषः) अस्ति, यः अद्वितीय देवता क्षरः तथा आत्मनः प्रभुः वर्तते सेश्वरः अथवा परमात्मा अस्ति।

प्रश्नोपनिषदे इत्थम्----

"तस्मै स होवाच-प्रजाकामो वै प्रजापतिः, स तपोऽतप्यत, स तपस्तप्त्वा मिथुनमुत्पादयते, रयिञ्च प्राणञ्चेति एतौ मे बहुधा प्रजा करिष्यत इति।[२]

१- श्वेताश्वतरोपनिषद् अ०१ श्लोक सं०१०। | २- प्रश्नोपनिषद् अ०१ श्लो०४।

रयि तथा प्राणः अर्थात् चन्द्रः तथा सूर्यः, क्षरः तथा अक्षर उभयोमिश्रणमेव जगदस्ति। अयं क्षरः पुरुषः तथा अक्षरः पुरुषः उभयमेव प्रलयकाले पुरुषोत्तमे लीनो भवतः। पुनः सृष्टिकाले मातरिश्वा तथा हिरण्यगर्भः तस्यैव सहायतया जीवस्य प्राणधारणादि समस्त क्रियायाः तथा क्रियाफल सम्पादनं कुर्वन्ति। अयमेव मातरिश्वा एव सूत्रात्मावायुः, अयमेव विश्वविधाता अथवा हिरण्यगर्भोऽस्ति।

भगवतो गीतायामुच्यते---

**द्वौ इमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।०।।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य विीर्त्तपव्यय ईश्वरः[1] ।।०।।**

क्षरः तथा अक्षरः उभयप्रकारः पुरुषः लोके प्रसिद्ध अस्ति। तेषु समस्त भूताः क्षर पुरुषाः तथा कूटस्थः अक्षरपुरुषाः, अन्यदपि एकः उत्तम पुरुष अस्ति। स एव परमात्मा, सैव ईश्वरः, स निर्विकारं भूते सत्यपि लोकत्रये प्रविष्टो भूत्वा ब्रह्माण्डस्य परिपालनं करोति। श्रीमद्भगवद्गीतानुसारेण तु

१- श्रीमद्भगवद्गीता अ०१५ श्लोक १६-१७।

भगवान पुरुषोत्तम एव चरमतत्त्वमस्ति। पुरुष एवं प्रकृति उभयमेव अस्य शक्तिमात्रमस्ति। मधुसूदनसरस्वती गीतायाः चतुर्दशोऽध्याये प्रथम श्लोकस्य टीकायां लिखति यत् निरीश्वरः सांख्यमतनिवारणार्थमेव क्षेत्र तथा क्षेत्रज्ञस्य संयोगस्य ईश्वराधीनः इति कथितम्----

"तत्र निरीश्वर सांख्यमतनिकारणेन क्षेत्र क्षेत्रज्ञ संयोगस्य ईश्वराधीनत्वं वक्तव्यम्" इति।

**ब्रह्मयोनि महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ।।०।।**
**सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं वीजाप्रदः पिता[१] ।।०।।**

देशतः कालतश्चानवच्छिन्नत्वान्महत् वृंहणत्वाच्च स्वकार्याणां वृद्धिहेतुत्वाद्वा ब्रह्म, प्रकृतिरित्यर्थः। तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानम् तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं निक्षिपामि। प्रलये-मयि लीनं सन्तमविद्याकामकर्मानुशयन्तं क्षेत्रज्ञं सृष्टि समये भोगभोग्येन क्षेत्रेण संयोजयामि। ततो गर्भाधानात् सर्वभूतानां ब्रह्मादीनां स

१- श्रीमद्भगवद्गीता अ०१४

उत्पत्तिः भवति। न केवलं सृष्ट्युपक्रम एव मदधिष्ठिताभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिः प्रकारः-- सर्वयोनिषु० अस्य श्लोकस्य श्रीधराचार्यः निम्नरूपेणार्थः, कृतः----

मनुष्यादि योनिषु या मूर्त्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते, तासां मूर्त्तीनां प्रकृतिर्योनिर्मातृस्थानीया। अहं च बीजप्रदः गर्भाधानादिकर्त्ता पिता।

उपर्युक्त श्लोकयोः श्रीधराचार्येण उपर्युक्तटीका कृता सा टीका मयात्र उधृतः।

श्रीमद्भगवतेऽप्यस्ति----

**दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।**
**आधत्तवीर्यं सासूत महत्तत्त्वं हिरण्मयम्** [१]।।०।।

जीवस्य अदृष्टकारण प्रकृतेः सर्वेभ्यः गुणेभ्यः क्षुब्धेसति परमपुरुषः स्वप्रकाशस्थानरूप प्रकृतियोनौ स्व वीर्यस्याधानं करोति, तदा तया प्रकृत्या महत्तत्त्वमुत्पन्नं भवति।

१- श्रीमद्भगवत २।२६।१९।

तन्त्रोक्तप्रकृतिरपि सांख्य प्रकृत्या समानं जडं नास्ति, सः पूर्णचैतन्यमयी अस्ति। तन्त्रमतानुसारेण शिवः साक्षात्पर ब्रह्म अस्ति स जाग्रदवस्थाभिमानी स्वप्नावस्थाभिमानी तथा सुषुप्त्यवस्थाभिमानी पुरुषविशेषः नास्ति। स तु तुरीयब्रह्म अस्ति। शारदातिलक नामक तन्त्रग्रन्थेऽस्ति। यत्----

**निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।**
**निर्गुणः प्रकृतेरन्यः सगुणः सकलस्मृतः ।।०।।**
**सच्चिदानन्द विभवात् सकलात्परमेश्वरात् ।**
**आसीच्छक्तिस्ततो नादो नादाद्विन्दु समुद्भवः ।।०।।**

शिवः साक्षात् परब्रह्म अस्ति, तस्य द्वौ विभावौ स्तः। सगुणः निर्गुणश्च, मायापहितपरब्रह्म एव सगुण अस्ति। तथा सः ब्रह्म यदा माययाऽनुपहितो भवति तदा सः निर्गुण अस्ति। सच्चिदानन्दस्वरूप परब्रह्मणः मायया उपहिते सति तेषु शक्ते आविर्भावो भवति। तस्याः शक्तेः नाद अथवा महत्तत्त्वं तथा नादेन विन्दुः तथा अहङ्कारतत्त्वमुत्पन्नं भवति। श्रीमददेवीभागवतस्य द्वादशस्कन्धे दशमोऽध्याये मणिद्वीपस्य वर्णनमस्ति, तस्य मणिद्वीपे यानि यानि देवानां स्थानानि सन्ति तेषां स्थानानां देवानाञ्च वर्णनं सम्यग् विधेयम्। तेषां

१- शारदातिलक ।

स्थानानां किं महत्वमिति विषयमधिकृत्य तन्त्रानुसारेण सम्यक् परिचिन्तितम्। अग्रे श्रीमद्देवभागवतस्य द्वादशस्कन्धे एव एकादशोऽध्याये पुनः द्वितीय प्रकारेण मणिद्वीपस्य वर्णनं विद्यते, वनधिकृत्य संक्षेपेण वर्णनं करिष्ये---

महामुनि व्यासेन निगदितमग्रे यत् पुष्पराग निर्मित परकोटस्याग्रे कुङ्कुमसमानं अरुणविग्रहयुक्तं पद्मराजमणेः एका परकोटा विद्यते। अस्य मध्यस्य भूमिरपि कुङ्कुमसमानमरुणविग्रह युक्तमस्ति। अयं प्राकारः दसयोजनदीर्घमस्ति। अ्र चतुःषष्ठिकलाः निवसन्ति। तासां कलानां पृथक् पृथक् लोकः वर्तते। तस्याः कलायाः नामानि अधोलिखितानि सन्ति----

१- पिंगलाक्षी

२- विशालाक्षी

३- समृद्धि

४- वृद्धि

५- श्रद्धा

६- स्वाहा

७- स्वधा

८- अभिरव्या

९- माया

१०- संज्ञा

११- वसुन्धरा

१२- त्रिलोकचात्री

१३- सावित्री

१४- गायत्री

१५- त्रिदेशेश्वरी

१६- सुरूपा

१७- बहुरूपा

१८- स्कन्दमाता

१९- अच्युतप्रिया

२०- विमला

२१- अमला

२२- अरुणी

२३- आरुणी

२४- प्रकृति

२५- विकृति

२६- सृष्टि

२७- स्थिति

२८ संहृति

२९- माता

३०- सन्ध्या

३१- परमसाध्वी

३२- हंसी

३३- मर्दिका

३४- वज्रिका

३५- देवमाता

३६- भगवती

३७- देवकी

३८- कमलासना

३९- त्रिमुखी

४०- सप्तमुखी

४१- सुरासुरविमर्दिनी

४२- लम्बोष्ठी

४३- उर्ध्वकेशी

४४- बहुशीर्षा

४५- वृकोदरी

४६- रथरेखा

४७- शशिरेखा

४८- गगनवेगा

४९- पवनवेगा

५०- भुवनपाला

५१- मदनातुरा

५२- अनङ्गा

५३- अनङ्गमथना

५४- अनङ्गमेखला

५५- अनङ्गकुसुमा

५६- विश्वरूपा

५७- सुरादिका

५८- क्षयङ्करी

५९- शक्ति

६०- अक्षोभ्या

६१- सत्यवादिनी

६२- बहुरूपा

६३- शुचिव्रता

६४- उदारा

तथा वागिशी, इमाः चतुःषष्ठिकलाः वर्तन्ते। आसां कलानामुपरि तान्त्रिकाः साधकाः वा रात्रौ विशेषपूजां कुर्वन्ति। अस्याः प्रत्येककलायाः मुखात् अग्निः ज्वाला प्रस्फुटिता भवति। तासां कलानां सम्यग्स्थितिः या वर्तते तस्याः वर्णनं श्लोकैः क्रियते।

ज्वलज्जिह्वाननाः सर्वाः वमंतो वह्निमुल्वणम् ।
जलं पिवामः सकलं संहरामो विभावसुम् ।।०।।
पवनं स्तम्भयामोद्य भक्षयामोऽखिल जगत् ।
इति वाचं संगिरन्ते क्रोधसंरक्तलोचना ।।०।।
चापवाणधराः सर्वा युद्धायैवोत्सुकाः सदा ।
शताक्षौहिणिका सेना तादृशी नृपसत्तम[1] ।।०।।

---

१- देवीभागवत १२स्कन्ध अ०११।

किं न कुर्याज्जगत्यस्मिन्नशक्यं वक्तुमेव तत् ।
सर्वापि युद्धसामग्री तस्मिन्शाले स्थिता मुने ।।०।।
रथानां गणना नास्ति हयानां करिणां तथा ।
शस्त्राणां गणना तद्वद्गणानां गणना तथा[1] ।।०।।

पद्मरागमयपरकोटस्याग्रे गोमेदरत्नेनरचितः दशयोजनस्यैकः महत् प्रकारः विद्यते, अस्य प्राकारस्य कान्तिः जपाकुसुमपुष्पवत् भासितो भवति। गोमेदप्राकारस्य यथा वर्णनं मिलति तथैव अत्रत्याः निलया अपि सन्ति। पक्षिणः, स्तम्भाः, वृक्षाणि, सरांसि च इमे सर्वे गोमदमणिना निर्मिताः सन्ति। सर्वेषां विग्रहः कुंकुमसमानमरुणमस्ति। अस्य प्राकारस्य मध्यभागें द्वात्रिंशत् प्रसिद्धाः महत्शक्तयः तथा देव्यः निवासं कुर्वन्ति। आसां देवीनां हस्तेषु नानाप्रकारस्य अस्त्र शस्त्राणि शोभां प्राप्नुवन्ति। इमानिशस्त्राणि गोमेदमणिना अलङ्कृतानि सन्ति। तन्त्रसाधकपयणाः प्रतिदिनं तन्त्रानुसारेण पूजां कुर्वन्ति रात्रौ जागरणं कृत्वा आसां शक्तीनां दर्शनमपि कुर्वन्ति। एकैकमहाशक्तया सह दशदशअक्षौहिणी सेना सदा युद्धकर्तुं तत्पराः सन्ति। तासु एका एव शक्तिः लक्षब्रह्माण्डानां संहारकर्तुं समर्थाः सन्ति। आभ्यः विभूतिभ्यः संयुक्तानां शक्तीनां तथा तासां सेनानां वर्णनं कर्तुं नहि कोऽपि समर्थः वर्तते। तासां

---

१- देवीभागवत १२स्कन्ध अ०११।

शक्तीनां, स्थान् , गणान् एवं वाहनानाञ्च गणना कर्तुमसंभवो विद्यते। भगवती जगदम्बायाः युद्धसम्बन्धी सर्वाः सामग्री तत्र विद्यमानाः वर्तन्ते। भगवत्याः इमाः अन्तरङ्ग सेना विद्यन्ते।

अग्रे तासां शक्तीनां पापनाशक नामानि कथयामि----

१- विद्या

२- न्ही

३- पुष्टि

४- प्रज्ञा

५- सिनीवली

६- कुहू

७- रुद्रा

८- वीर्या

९- प्रभा

१०- आनन्दा

११- पोषिणी

१२- ऋद्धिदा

१३- कालरात्रि

१४- महारात्रि

१५- भद्रकाली

१६- कपर्दिनी

१७- विकृति

१८- दण्डिनी

१९- मुण्डिनी

२०- सेन्दुखण्डा

२१- शिखण्डिनी

२२- निशुम्भशुम्भमथिनी

२३- महिषासुरमर्दिनी

२४- इन्द्राणी

२५- रुद्राणी

२६- शंकरार्द्धशरीरिणी

२७- नारी

२८- नारायणी

२९- त्रिशूलिनी

३०- पालिनी

३१- अम्बिका

३२- न्हादिनी

गोमेदप्राकारस्याग्रे वज्रमणिनिर्मिते एकः प्रकाराः विद्यते स दशयोजन विस्तीर्ण प्राकारस्य तुंगः वर्तते। अग्रे श्लोकैः वर्णयामि----

**शालतन्मध्यमूम्यादि सर्वं हीरमयं स्मृतम् ।**
**गृहाणी वीथयो रथ्या महामार्गा गणानि च ।।०।।**
**वृक्षालवालतरखः सारंगा अपि तादृशाः ।**
**दीर्घिकाश्रेणयो वाप्यस्तडागाः कूपः संयुताः ।।०।।**
**तत्र श्री भुवनेश्वर्या वसन्ति परिचारिकाः ।**
**एकैका लक्षदासीभिः सेविता मदगर्विता ।।०।।**

इत्यादि प्रकारेण बहवः श्लोका अस्य परकोटस्य वर्णने विद्यन्ते विस्तरभयादत्र श्लोकन् न लिखामि।

तत्र भुवनेश्वरी देवी निवसति, तस्या भुवनेश्वर्याः दासयः मदगर्विता, युवास्थासम्पन्ना सुन्दराणि सुन्दराणि वस्त्राणि धारयन्ति। ताः देव्यः भुवनेश्वर्याः कृपया त्रैलोक्यमपि तृणवत्

मन्यन्ते। एताः सर्वाः शक्तयः भुवनेश्वर्याः दूतिकाः सन्ति। आसां नामानि इमानि सन्ति----

अनङ्गरूपा, अनङ्गमदना सुन्दरी, मदनातुरा, भुवनवेगा, भुवनपालिका, सर्वशिशिरा, अनङ्गवेदना तथा अनङ्गमेखला, आसामङ्गानि विधुतसमानाः प्रकाशमानाः सन्ति। आसु चरणेषु शब्दायमानानि नुपूराणि संशोभन्ते।

एतस्य प्राकारस्याग्रे (वज्रनिर्मित) वैदूर्यमणिनारचितः एक अन्यः प्राकारः विद्यते, गोपुर तथा द्वारेण शोभायुक्तोऽयं प्राकरः दसयोजन विस्तीणः वर्तते। अस्य प्राकारस्य भवनानि, राजमार्गाः, कूपानि, सरासि, नदीनां तटोसि एते सर्वे वैदूर्यमणिना सुशोभितानि सन्ति। प्रत्येक ब्रह्माण्डस्य मातृकाणामेव समष्टिरूपमयं प्राकारः विद्यते। अत्र सप्तमातृका निवसन्ति, तासा नामानि इत्थम्----

ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही इन्द्राणी तथा चामुण्डा एताः सप्तमातृका नाम्ना प्रसिद्धा अस्ति। अष्टमातृका नाम ''महालक्ष्मी'' अस्ति।

वैदूर्यमणेः प्राकारस्याग्रे इन्द्रनीलमणिद्वारा रचितः दसयोजन विस्तीर्णः एक उत्तमः प्राकारः विद्यते तत्र सर्वाणि भवनानि तथा अन्याः सर्वा वीथ्यादयः नीलमणिना रचितानि सन्ति। कथ्यतेस्म यत् तत्र अनेक योजनविस्तीर्णः एकः कमलः अस्ति। तं कमलं इदृशं ज्ञायते यत् षोडशअरैः युक्तः सुदर्शनचक्र मस्ति। तत्र षोडशशक्तीनां विराजार्थं विविधानि रम्याणि स्थानानि निर्मितानि सन्ति। तासां शक्तीना नामानि इमानि सन्ति----

कराली, विकराली, उमा, सरस्वती, श्रीदुर्गा, उषा, लक्ष्मी, श्रुति, धृति, श्रद्धा मेधा, मति, कान्ति, तथा आर्या। इमाः षोडश शक्तयः नीलमेघ समाना सुशांभितानि सन्ति। जगद्धात्री भगवतीदेव्या इमाः सर्वाः सेनानी सन्ति। भगवत्याः जगदम्बायाः शक्तयाः सम्पन्ना इमाः ब्रह्माण्डं क्षुब्धं कर्तुः समर्थाः सन्ति। सहस्त्रमुखयुक्तो नाग अपि आसां शक्तीनां पराक्रमस्य वर्णनं कर्तुमसमर्थाः वर्तन्ते।

नीलमणिमहान् प्रकारस्याग्रे एकं विशालं मुक्ताप्राकार-मस्ति, दसयोजन विस्तीर्णोऽयम्। अस्य मध्यभागेऽष्टदलकमलं विराजते। इदं कमलं केसरयुक्त मस्ति। तस्य अष्टदलकमलस्योपरि

भगवती भुवनेश्वरी समानं आकृतिधारिणीदेव्यः करे आयुधं नीत्वा सदा विराजमानाः विद्यन्ते। जगदस्य समाचारसूच्यर्थं देव्य भगवत्याः जगदम्बिकायाः अष्टसचिवाः कथ्यन्तेस्म। स्वामिन्याः कार्य सम्पादनार्थं इमाः तत्पराः दृश्यन्ते। आसां देवीनां नामानि इमानि----

अनङ्गकुसुमा, अनङ्गकुसुमातुरा, अनङ्गमदना, अनङ्गमदनातुरा भुवनपाला, गगनवेगा शशिरेखा तथा गगनरेखा नाम्ना प्रसिद्धाः वर्तन्ते।

मुक्ता प्राकारस्याग्रे महामरकतमणिना रचितः एको द्वितीयः प्राकारः विद्यते, दसयोजन विस्तीर्णमिदं प्राकारं सर्वेभ्यः प्राकारेभ्यः श्रेष्ठः कथ्यतेस्म।

अस्मिन् प्रकारे भगवतीभुवनेश्वर्याः एकं विशालं षटकोणयुक्तं यन्त्रमस्ति, तस्मिन् कोणयन्त्रोपरि देषां देवानां नामानि तान्यत्र लिखामि----

१- पूर्वकोणे चतुर्मुखो ब्रह्मा भगवती गायत्र्या सह विराजते, स्मृतयः तथा पुराणानि तत्र विराजन्तेतमाम्। ये ब्रह्मणः विग्रह उच्यन्ते।

२- नैर्ऋत्यकोणे शंखचक्रगदा तथा कमल धारणकर्त्री भगवती सावित्री विराजमाना विद्यते, तत्र विष्णोरपि विराजन्ते।

३- वायव्यकोणे स्ववेषेन युक्तः महान् रुद्रः विराजते। तत्र भगवती सरस्वतीरपि स्ववेषे एव विराजते, दक्षिणामूर्ति--आदिभेदेन ये रुद्राः तथा गौरी आदि भेदेन याः पार्वतीः ताः सर्वाः तत्र विराजन्ते। चतुः षष्ठिप्राकारस्यागमाः तदतिरिक्ताः ये अन्यागमाः ते सर्वे मूर्तिमानभूत्वा तत्र विराजन्ते।

४- अग्निकोणे धनस्यस्वामी कुबेरः विराजते, अनेकप्रकारस्य वीथयः तथा महालक्ष्मिभ्यः युक्तः कुबेर अस्ति। भगवत्याः जगदम्बायाः कोषस्य रक्षार्थ कुबेरः तत्र स्थास्यते।

५- वरुणसम्बन्धी महान् कोणे रतिना सह कामदेवः निवासं करोति। मूर्तिधारी सम्पूर्णश्रृगाराणां तत्र निवासः भवति।

६- ईशान कोणे विघ्नानांशासनकर्त्तारः विघ्नविनाशकः प्रतापीगणेशः देव्यापुष्ट्या सह पाशाङ्कुश सहितं विराजते। गणेशस्ययाः विभूतयः सन्ति ताः सर्वाः महदैश्वर्य सम्पन्नो भूत्वा तत्र सुशोभिताः भवन्ति। प्रत्येकब्रह्माण्डे ब्रह्माप्रभृते याः

समष्टयः सन्ति ताः सर्वा ब्रह्मा नाम्ना विख्याताः सन्ति, एतैः द्वारा भगवती जगदीश्वर्याः तत्र सदा सेवा भवति।

महामरकतप्राकारस्याग्रे शतयोजनविस्तृतं द्वितीयः प्रावालस्य प्राकार अस्ति। अस्य विग्रहः कुंकुमसमानमरुण-वर्णमस्ति। अस्य प्राकारस्य मध्यभागे पञ्चभूतानां पञ्चस्वामिनः वसन्ति। तेषा स्वामीनां पञ्चशक्तयः सन्ति तासां नामानि--- हृल्लेखा, गगना, रक्ता, करालिका, महेच्छुष्मा,। आसां प्रत्यकअङ्गे नवीनतारुण्यस्य गर्वो व्याप्तः वर्तते। वेषभूषायां इमाः भगवत्याजगदम्बायाः समानमस्ति।

प्रवालप्राकारस्याग्रे नवरत्नैः युक्तः अनेकयोजन विस्तृतः एकः महान् प्राकार अस्ति। आगमप्रसिद्ध "आम्नाय संज्ञक" देवानां बहूनि भव्यभवनानि तत्र शोभां प्राप्नुवन्ति। तत्र तडागाः सरांसि नवरत्नमयानि सन्ति। श्रीदेव्याः यान्यवताराणि सन्ति तासां सर्वासां निवासस्थानं तत्र निश्चितमस्ति। महाविद्यायाः सर्वाण्यवताराणि तत्र विराजन्त। सप्तकोटि महान् मन्त्राणां देवानामपि तत्र स्थानमस्ति।

अस्य नवरत्नमय प्राकारस्याग्रे चिन्तामणिनिर्मितः एकः विशालः देवालय अस्ति। तत्रत्यानि सर्वाणि वस्तूनि चिन्तमणिद्वारा निर्मितानि सन्ति। विद्युत्समानानि प्रकाशमानानि

यानि प्रस्तराणि सन्ति तानि सर्वाणि तस्मिन् देवालये सन्ति।

तदेव देवीसदनं मध्यभागे विराजते ।
सहस्रस्तम्भ संयुक्ताश्चत्वारस्तेषु मण्डपाः ।।०।।
श्रृंगार मण्डपश्चैको मुक्तिमंडप एवंच ।
ज्ञानमंण्डपसंज्ञस्तु तृतीयः परिकीर्तितः ।।०।।
एकांतमण्डपश्चैव चतुर्थः परिकीर्तितः ।
नानावितान संयुक्ता नानाधूपैस्तु धूपिताः ।।०।।
कोटिसूर्यसमाकान्त्या भ्राजंते मंडपाः शुभाः ।
तन्मण्डपानां परितः काश्मीर वनिका स्मृता ।।०।।
मल्लिकाकुंदवनिका यत्र पुष्कलिका स्थिता ।
असंख्याता मृगमदै पूरितातत्स्रवा नृप ।।०।।
महापद्मावती तद्वद्रल सोपान निर्मिता ।
सुधारसेन सम्पूर्णा गुञ्जनमत्तमधुव्रता ।।०।।
हंसकारण्डवाकीर्णा गन्धपूरितदिक्तटा ।
वनिकानां सुगंधैस्तु मणिद्वीपं सुवाषितम् ।।०।।
श्रृंगार मण्डपे देव्यो गायन्ति विविधैः स्वरैः ।
सभासदो देववरा मध्ये श्रीजगदम्बिका ।।०।।
मुक्तिमंडपमध्ये तु मोचयत्यनिशं शिवा ।
ज्ञानोपदेशं कुरुते तृतीये नृप मण्डपे ।।०।।
चतुर्थमण्डपे चैव जगद्रक्षाविचिन्तनम् ।
मन्त्रिणी सहिता नित्यं करोति जगदम्बिका ।।०।।

तत्र ब्रह्मलोकस्योपरिभागे यः ''सर्वलोक'' श्रूयते स एव मणिद्वीपः वर्तते, तस्य मणिद्वीपस्य वर्णनं सम्यक् तया द्वादशस्कन्धस्य दशमेऽध्याये एकादशोऽध्याये च जातः, अग्रे द्वादशोध्याये मणिद्वीपस्य वर्णन प्रसंगे एव भगवतीजगदम्बायाः स्थानवर्णनं विशेषरूपेण प्रस्तूयते, तस्मिन् मणिद्वीपस्य मध्यभागे अतीव शोभासम्पन्नः सुन्दरतरः सुन्दरतमश्च भगवत्याः जगदम्बायाः भवनमस्ति, तस्य भवने चत्वारः मण्डपाः सन्ति। प्रत्येक मण्डपे सहस्रशः सहस्रशः स्तम्भाः शोभन्ते। प्रथमः श्रृंगार मण्डपः, द्वितीयः मुक्तिमण्डपः तृतीयः ज्ञानमण्डपः चतुर्थः एकान्तमण्डपः, इति नाम्ना विख्याताः सन्ति। इमानि मण्डपानि नानावितानयुक्तानि सन्ति, अनेकानि धूपानि युक्तानि मण्डपानि अतः सुगंधितानि वर्तन्ते। इमानि सुन्दरमण्डपानि कोटिसूर्यसमानानि प्रकाशमानानि सन्ति। चतुर्षु मण्डपेषु परितः महापद्माटवी वर्तते तेषां सोपानानि रत्नेभ्यः निर्मितानि सन्ति। तत्र निरन्तरं भ्रमरा गुञ्जायमानाः। अनेनप्रकारेण असंख्यवाटिकाभ्यः सुरम्यसुगन्धेभ्यः स मणिद्वीपः सुवासितो वर्तते। प्रथमः यः श्रृंगारमण्डपः तस्मिन्मण्डपे मध्यभागे एकं दिव्यं सिंहासनोपरि देवी विराजमानाः सन्ति। तत्र सभासदरूपेण स्थिताः प्रधानदेवाः, देवाङ्गनाः, तथा सर्वा अप्सराः विविधस्वरेभ्यः भगवतीजगदम्बायाः समक्षे गानं कुर्वन्ति।

द्वितीयः " मुक्तिमण्डपः" अस्ति, तस्य मध्यभागे विराजमानाः कलयाणमयी भगवती शिवा प्रत्येक ब्रह्माण्ड निवासिनान् भक्तान् सदा मोक्षप्रदानं कुर्वन्ति।

तृतीय मण्डपस्य नाम "ज्ञानमण्डप" मस्ति। तस्मिन्मण्डपे विराजमानाभगवतीजगदम्बा ज्ञानोपदेशं कुर्वन्ति।

चतुर्थमण्डपस्य नाम "एकान्तमण्डप" अस्ति। तस्मिन् मण्डपे भगवतीजगदम्बा अनङ्गकुसुमा आदयः सचिवाशक्तिभिः सह स्थित्वा जगद्रक्षाविषये निरन्तरं परामर्शं कुर्वन्तीति।

चिन्तामणिगृहः देव्या प्रधानस्थानमस्ति, तान्त्रिक दृष्ट्या सस्थानः अतिमहत्वपूर्णं विद्यते, मूलप्रकृति भगवतीभुवनेश्वर्याः दशशक्तितत्त्वाः सोपानरूपेण तत्रोपस्थिताः वर्तन्ते। तैः युक्तः भगवत्याः उन्नतमञ्चाः शोभां प्राप्नोति। ब्रह्मा, विष्णुः रुद्रः तथा सदाशिवः एते चतुरोदेवाः तस्य मञ्चस्य खुराः प्रोक्ताः, सदाशिवः तस्य मञ्चस्य फलकाः सन्ति। तस्य मञ्चस्योपरि महान्देवः परमादरणीयः भुवनेश्वरः विराजते। सृष्ट्यादौ स्वलीलाकरणाय स्वयं भगवती एव उभे रूपे विराजमाना अभूत्। तस्मिन् समये दक्षिण भागात् भगवान् भुवनेश्वरः तथा

वामभागात् सबल ब्रह्मस्वरूपिणी भगवती भुवनेश्वरी प्रकटिता। भगवत्याः अर्धाङ्गस्वरूपः ते एव (भुवनेश्वरः) महान् ईश्वरः सन्ति। कामदेवमदस्य मर्दनकरणे परमकुशलाः इमे महेश्वराः कोटि कामदेवेभ्यः समानं सुन्दरतममस्ति। ते कोटिसूर्यैः समानं प्रकाशमानाः विद्यन्ते। सुन्दरस्फटिकमणेः समानं देदीप्यमानाः। तेषा श्रीविग्रहेण शीतलप्रकाशं प्रसरति। तस्य वामाङ्गे भगवती भुवनेश्वरी विराजमानाः सन्ति। नवप्रकारैः रत्नैः रचिता दिव्या मेखला भगवत्याः कटिभागस्य शोभां वर्द्धयति। संतप्तसुवर्णेन तथा वैदूर्यमणिनासम्पन्नः बाजूबन्दः देव्याः हस्तौ सुशोभितौ स्तः।

"ललाटकान्तिर्विभवविजितार्धसुधाकरा"

कुंकुमात् कस्तूर्याश्च सुन्दरतिलकेन देव्याः मुखमण्डलमसीमशोभां प्राप्नोति। देव्याः त्रीणि नेत्राणि सन्ति। अग्रे श्लोकैः वर्णयामि=

**कल्पिताच्छमहारग पद्मरागोज्वलप्रभा ।**
**रत्नकिंकिणिकायुक्त रत्न कंकण शोभिता ।।०।।**
**मणिमुक्तासरापारलसत्पदक संस्तुतिः ।**
**रत्नांगुलि प्रविततप्रभा जाललसत्करा ।।०।।**

---

१- देवीभागवत स्क०१२ अ०१२ श्लोक २७-२८।

कंचुकी गुम्फितापार नानारत्नतति द्युतिः ।
मल्लिकामोदिधम्मिल्ल मल्लिकालि सरावृता ।।०।।
सुवृत्तनिविडोत्तुङ्ग कुचभारालसा शिवा ।
वरपाशांकुशाभीति लसद्बाहु चतुष्टया ।।०।।
सर्वश्रृंगार वेषाढ्या सुकुमारांगवल्लरी ।
सौंदर्यधारा सर्वस्वा निर्व्याजकरुणामयी ।।०।।
निजसंलाप माधुर्य विनिर्भर्त्सित कच्छपी ।
कोटिकोटिर विंदूनां कातिं या विभ्रती परा ।।०।।
नानासखीभिदोसीभिस्तथा देवांगनादिभिः ।
सर्वाभिर्देवताभिस्तु समंतात्परिवेष्टिा ।।०।।
इच्छाशक्तया ज्ञानशक्तया क्रियाशक्तया समन्विता ।
लज्जा तुष्टिस्तथा पुष्टिः कीर्ति कान्ति क्षमा दया ।।०।।
बुद्धिमेधा स्मृतिर्लक्ष्मी मूर्तिमत्योऽङ्गनाः स्मृताः ।
जया च विजयाचैवाप्यजिता चा पराजिता ।।०।।
नित्या विलासिनो दोग्ध्री त्वधोरा मंगला नवा ।
पीठशक्तय एतास्तु सेवंते यां पराम्बिकाम् ।।०।।
यस्तास्तु पार्श्वभागे स्तो निधी तौ शंख पद्मकौ ।
नवरत्न वहान द्यस्तथा वै कांचनस्त्रवा ।।०।।
सप्तधातुवहानद्यो निधिभ्यां तु विनिर्गता ।
सुधासिन्ध्वंतागामिन्यस्ताः सर्वा नृप सत्तम ।।०।।
सा देवी भुवनेशानी तद्वमांके विराजते ।
सर्वेशत्वं महेशस्य यत्संगादेव नान्यथा ।।०।।

---

१- देवी भागवत स्क०१२ अ०१२ श्लोक २९-३८।

अत्र पर्यन्तं चिन्तामणिगृहदेव्या प्रधानं स्थानमस्ति अस्य स्थानस्य वर्णने सहैव भगवत्याः भुवनेश्वर्यायाः स्वरूपस्यापि वर्णनं विधेयम् , तदनन्तरं देव्या सहैव भगवान् भुवनेश्वरस्यापि वर्णनं संक्षेपेणास्ति। अग्रे तस्य चिन्तामणि गृहस्य परिमाणं किमस्ति अस्यापि वर्णनं भविष्यति परन्तु संक्षेपत एव।

अयमतिविशालः भवनः सहस्रयोजनविस्तीर्ण अस्ति। अस्योत्तरभागे बहवः सुदीर्घप्राकाशः वर्तन्ते। पूर्वप्राकारेणोत्तर प्राकारः क्रमशः द्विगुण परिमाणे अस्ति। भगवत्याः जगदम्बायाः इदं मणिद्वीपं भूमोपरि नास्ति अपि तु अन्तरिक्षलोके सुशोभितो वर्तते। प्रलयकाले अस्य नाशो न भवति न सृष्टिसमयेऽस्योतपत्तिः किन्तु कार्यवशात् पटस्य समानं निरन्तरमस्मिन् संकोचः विकासो भवति। मणिद्वीपे याः परकोटाः सन्ति तेषां सर्वेषां शोभा तस्य चिन्तामणिगृहस्यावध्या सापेक्षं वर्तते। स एव भव्यभवनः भगवती महामायायाः विराजमानस्य स्थानमस्ति। ये ये ब्रह्माण्डवर्ती उपासकाः सन्ति ते तथा अन्ये अथवा भक्ताः ते सर्वे अत्रागच्छन्ति, आगत्य साधनां पूजां च कुर्वन्ति। तत्रैव ते प्राणत्यागमपि कुर्वन्ति। प्राणत्यागस्य पश्चात् ते देव्या पार्श्वे गच्छन्ति। यत्र तस्मिन्मणिद्वीपस्य चिन्तामणिगृहे यत्र भगवती विराजते तत्र घृतकुल्या, दधिकुल्या, मधुस्त्रवा,

अमृतवहा, द्राक्षारसवहा, जम्बूरसबहा, तथा आम्रेक्षुरसवहा, आदि सहस्रशः नद्यः प्रवहिताः भवन्ति। तत्र मनोरथ प्रदानकर्त्तारः बहवः वृक्षाः कूपानि सन्ति। मणिद्वीपे रोगेण कश्चिदपि शरीरः क्षीणो न भवति। वृद्धावस्थायाः प्रभावः तत्र न भवति। स दिव्यः स्थानः चिन्ता, मात्सर्यं, कामं क्रोधैः रहितो विद्यते। तत्रतः निवासिनः युवावस्थायाः सम्पन्नाः, स्त्रीयुक्ताः, तथा कोटिसूर्यसमानाः प्रकाशमानाः तिष्ठन्ति, ततः निरन्तरं केवलं भगवत्या भुवनेश्वर्य्याः तन्त्रानुसारेण साधनां कुर्वन्ति। ब्रह्माण्डे ये देवा वसन्ति तेऽपि मणिद्वीपे आगत्य भगवती जगदम्बायाः आराधनायामहर्निशं तत्पराः भवन्ति। साम्यावस्थायां स्थिता देवी शिवा कारणब्रहस्वरूपा अस्ति। सर्वाः महाविद्याः सदा तस्यां भगवत्यां सेवायां संलग्नाः तिष्ठन्ति। अनेन प्रकारेण मणिद्वीपस्य महिमानां वर्णितं मया-अग्रे इदमस्ति यत् कोटयः सूर्यः, चन्द्रमसः, अग्नयः, तथा विद्युत मणिद्वीपस्य प्रभायाः तुलनायामसर्थाः सन्ति। मणिद्वीपस्यो मध्यभागः रत्नमयकमलभ्यः अनुपमा शोभा प्राप्यते। तस्य परिवृतः शतयोजनभूमिः उत्तमगन्धेभ्यः सदा सुवासितो भवति। मन्दगतिना प्रवाहितो भूत्वा वायुः वृक्षान् शनैः शनैः स्पन्दितं करोति। दससहस्रयोजनपर्यन्तभूमिः धूपेन परमसुधूपितो भवति। अग्रे संक्षेपेण श्लोकैः वर्ण्यते----

**इतिते वर्णितं राजन् मणिद्वीपं महत्तरम् ।**
**महादेव्या परं स्थानं सर्वलोकोत्तमोत्तमम् ।।०।।**
**एतस्य स्मरणात्सद्यः सर्वपापं विनश्यति ।**
**प्राणोत्क्रमण सन्धौ तु स्मृत्वा तत्रैव गच्छति ।।०।।**

संसारात् ब्रह्मलोक पर्यन्तं ये आनन्दाः ते सर्वे अस्मिन् पुर्यां (मणिद्वीपे) विद्यमानाः सन्ति। महादेव्याः इदं परमधामं सम्पूर्णलोकेभ्यः श्रेष्ठ अस्ति,अस्य मणद्वीपस्य स्मरणमात्रेण सर्वे पापाः नष्टाः भवन्ति। मरणसमये मणिद्वीपस्य यदिस्मरणं आयाति तदा प्राणी तत्रैव गच्छति।

अस्य मणिद्वीपस्याध्ययनं यदि तान्त्रिकाः तन्त्रदृष्ट्या कुर्वन्ति तर्हि ते सिद्धाः भविष्यन्ति। तान्त्रिकदृष्ट्या अस्य महत्त्वं महत्वपूर्णं विद्यते, भगवतीसम्बन्धस्य सर्वाणि वस्तूनि वर्णितानि सन्ति। द्वादशोऽध्यायेऽन्तिमे इदमस्ति यत् ये साधकाः अस्य पञ्चअध्यायस्य (अष्ट अध्यायात् द्वादशअध्याय पर्यन्तं) पाठं करिष्यन्ति ते भगवत्याः मणिद्वीपे अवश्यमेव गमिष्यन्ति। तान्त्रिक दृष्ट्या तु अस्य मणिद्वीपस्य महत्त्वं सर्वश्रेष्ठतमं वर्तते, अतः मानवाः यदि भगवत्याः सम्बन्धे किञ्चित् ज्ञातुमिच्छन्ति तर्हि अस्याध्यपनमवश्यं कर्तव्यम्।

---

१- देवीभागवत १२।१२।श्लोक ७०-७१।

भगवत्याः विषये किञ्चित् स्व विचारं प्रस्तूयते मणिद्वीपस्याध्ययन परिप्रेक्ष्ये----

भगवती पराम्बामहाशक्तिः विद्यते, स महाशक्तिः तं मणिद्वीपे सर्वेषां मध्ये विराजते, तं महाशक्तिमवलम्बय साधकाः साधनां कुर्वन्ति, तान्त्रिकदृष्ट्या महाशक्तिरेव सर्वोत्कृष्टाः मन्यन्ते साधकाः। स महाशक्तिः का! इति विचारणीयोऽयं प्रश्नः, तत्र अहं इदं कथ्यते यत्----

महाशक्तेः ज्ञानार्थं सर्वप्रथमं त्रीन् पदार्थान् ज्ञानमावश्यकमस्ति, शक्तः, शक्तिः, तथा शक्यः। अत्र "शक्तः" नाम समर्थस्य विद्यते, "शक्ति" नाम सामर्थ्यस्य विद्यते, "शक्य" नाम तस्यास्ति यस्मिन् समर्थः स्वसामर्थ्यं ज्ञायते, यथा--- अग्निः "शक्तः", दाहकत्वं "शक्तिः" तथा तृणादिः दाहकर्म तस्य शक्यमस्ति,। फलतः "शक्तः" कारणम् , 'शक्तिः' तस्य योग्यता, तथा "शक्यः' तस्य कार्यमस्ति,। इदमुपर्युक्त दृष्टान्तः संसारस्य प्रत्येक प्रत्येकवस्तौ विद्यते। पृथ्वी जलं वायुः नभः शरीरः इन्द्रियः तथा अन्य स्थावरजङ्गमादयः कश्चिदपि वस्तु भवेत् सर्वेषु तस्य योग्यता अवश्यमस्ति। शक्तया कश्चिदपि वस्तु रिक्तो न वर्तते। अन्नस्यं शक्तिः

बुभुक्षाशान्त्यर्थमस्ति तथैव जलस्य शक्ति पिपासा शान्त्यर्थं वर्तते, अनेनैव प्रकारेण फलानि पुष्पाणि, औषधयः, वनस्पतयः, इत्यादिषु सर्वेषु सर्वासु च शक्तिः किञ्चित् कार्याय एव विद्यते। पिपीलिकात् हस्ति पर्यन्तं कीटपतङ्गदयः स्वकार्ये शून्यो नास्ति। अग्नौ दाहकता शक्ति, तृणे ज्वलनस्य शक्तिः, अनेनैव प्रकारेण अनेक कारणात् भिन्न भिन्न प्रकारस्य शक्तिः विद्यते। एकम् , एकम् , कारणं अनेक कार्येषु शक्तिः विद्यामाना भवति। यथा- एकैव- घटरूप कार्यकुलालः चक्रं-दण्डं-सूत्रं-जलं-मृत्तिका-अदृष्टः, ईश्वरः, ईश्वरज्ञानं, ईश्वरेच्छा, ईश्वर प्रयत्नं, इत्यादि अनेक कारणानां भिन्न भिन्न शक्तीनां साध्यमस्ति। तथा स घटमपि स्व प्रत्येक कारणेन सह भिन्न भिन्न भिन्न प्रकारस्य साध्यतायाः शक्तिः स्थापितुं करोति। यत्र एकः कार्यः अनेककारणैः भवति, तत्र प्रत्येककारणस्य भिन्न भिन्न प्रकारस्य व्यापारः तथा भिन्न भिन्न प्रकारस्योपयोग अस्ति। उदाहरणानि बहूनि सन्ति परन्तु दातुं नोपयोगं प्रतीयते। एक एव अग्निः स दाहमपि करोति, शीत निवारणमपि करोति, पाकादिकार्यमपि करोति, प्रकाशमपि करोति, एवं लताः, वृक्षाः, वनस्पतयः, औषधयादिषु फलफूलादेः पाकमपि करोति। कथनस्य तात्पर्यमिदमस्ति अस्याः शक्तेनुपरि ध्यान दानेन विस्तारं प्रति बुद्धे गमनं भवति, बुद्धिः शक्तिमा सह गमने श्रमयुक्तो भवति परन्तु शक्तेः विस्तारस्य अन्तो न

भवति।

इयं कारणातारूप शक्तिं नैयायिकाः कस्मिन् कस्मिन् वस्तौ न मन्यन्ते। यथा ते कथयन्ति ''पारिमण्डल्य भिन्नानां कारणत्वमुदाहृतम्'' अणुपरिमाणात् भिन्नः सर्वेषु पदार्थेषु कारणता तिष्ठति, परन्तु तेऽपि स्वविषयकज्ञानं प्रति तस्यापि कारणता मन्यन्ते एव। प्रत्येकावस्थायां नित्यनित्येषु सर्वेषु पदार्थेषु कारणता शक्तिः तिष्ठति।

अत्राहं प्रत्येक वस्तोः शक्तया महाशक्तेः पक्षे स्वदृष्टि ददामि ततः पश्यामि सर्वेषु वस्तुषु शक्ति कथमस्ति कश्चिदपि वस्तु शक्तयाविनं नास्ति। इदं कथं भवितुं शक्नोति, तदा अस्योत्तर इदं मिलति यत् काचिद् एका व्यापक शक्तिं विना लघ्वी लघ्वी स्थूला स्थूला वस्तौ शक्तिं भवितुं शक्नुयात्। सुतरां कश्चित् महासमुद्रस्य समानं अनन्तः आकाशस्य समानं व्यापक शक्तिरस्ति। तस्यैव सर्वेषु वस्तुषु प्रसरमस्ति। तस्यैव कारणात् सर्वेषु पदार्थेषु शक्तिरस्ति। तमेव सांख्यशास्त्र पारंगताः प्रधानमथवा मूलप्रकृतिः, मीमांसकाः कर्म, वेदान्तिनः ब्रह्म, पौराणकादिः परमात्मा, विष्णु-शक्तिः माया प्रकृतिः आदि उच्चारयन्ति। इमाम् महाशक्तिं योगीश्वराः समाधौ ध्यानां साधनां कृत्वा परमपदमोक्षस्य प्राप्तिं कुर्वन्ति। अहं स्व बुद्ध्या

अयमेव निश्चयं करोमि यत् सः हरि एव त्रिलोकनाथ महाशक्ति अस्ति सर्वे तस्यैव नाम----

यं शैवा समुपासते शिव इति ब्रह्मेति वेदान्तिनो,
बौद्धाः बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्य नाथो हरिः।

परमईश्वरतत्त्वात् निष्क्रान्ताः अनन्तशक्तेः नाम महाशक्तिरस्ति। जगत्पदार्थानां मूलकारणमियमेव शक्तिः। असंख्य ब्रह्माण्डानि तथा तेषां कोटि कोटि जीवाः तथा वस्तवः तस्याः महाशक्तेः विकासः वर्तते। तस्या एव अनन्तगर्भात् प्रकृतेः क्रियात्मकशक्तीनां प्रादुर्भावः तथा विकासमभूत्। सा सत्यसनातसत्तायाः आादि दैवी नारी-तत्त्वमस्ति, तथा सदैव पुरुषतत्त्वं शिवेन संयुक्तोऽस्ति। शिवः तथा शक्तिः अलक्ष्यः तथा अविज्ञेयरूपे परमं, परत्परं, सर्वोपरि ब्रह्मासत्तायां सर्वथा ''एकः'' अस्ति।

महाशक्तिः कोटि कोटि ब्रह्माण्डानां जननी अस्ति। समस्ताः जीवाः तथा प्राणिनः तस्याः रूपमाकारमस्ति। सर्वेषु जीवनेषु, सर्वासुप्रकृतिषु, बाह्याभ्यन्तरगतिषु अस्माकं महाशक्ते एव प्रेरणा विद्यते। तस्या एव क्रिया अस्ति, पञ्चमहाभूतानि

(पृथ्वी-जलं-अग्निः-वायु-आकाशः) कर्मेन्द्रियः, ज्ञानेन्द्रियः, मनः, बुद्धि तथा सृष्टिस्थितेः मूले बुद्ध्या परः यो हि दिव्य चेतन आत्मा अस्ति सैव तस्य पूर्णस्वरूपमस्ति।

विश्वमाता निर्विकल्पकं, अव्ययं, सर्वव्यापक शून्यं शिवात् भिन्नो नास्ति, तथा मातुः व्यक्त सत्तायाः सैवाधार अस्ति, इदमेवरहस्यमस्ति। अतः सर्वगुणमयी सर्वज्ञानमयीशक्तिः मातरं आत्मसमर्पण द्वारा प्राप्तकरणमेव आध्यात्मकानुभूतेः पराकाष्ठामस्ति। अस्य दिव्यानुभूतौ आत्माअनायासः एकैव सह शिवः तथा महाशक्तिना सह तादात्म्यं तथा एकाकारतामनुभवं करोति। अस्या एव महाशक्तेः मणिद्वीपोपरि देवाः तथा सर्वे साधना कृत्वा मोक्षपदमाप्नुवन्ति। तान्त्रिक दृष्ट्या महाशक्ति एव सर्वोपरि वर्तते अस्मात् कारणादेव तां महाशक्तिं सर्वे अर्चयन्तीति।

........................................................

## *षष्ठोऽध्यायः*

**तन्त्रोक्त विविधयोगानां देवीभागवते प्रतिपादनस्वरूपम्। तन्त्रोक्त संध्या, मुद्राप्रभृतीनां देवीभागवते कीदृशमुपस्थापनमिति पर्यवेक्षणम्।**

उपर्युक्तविषयमवलम्ब्य श्रीमद्देवीभागवतस्य प्रथमस्कन्धस्य षष्ठोऽध्याये प्रलयस्य प्रसंगे योगनिद्राया प्रतिपादनं विद्यते। तस्य संक्षेपेण वर्णनं विधीयते।

प्राचीनकाले त्रिलोकी जलमग्नोऽभूत् , केवलं भगवान् विष्णु तस्मिन् जलाशये शेषनागस्यशय्यामुपरिशेते। तस्मिन् समये विष्णोः कर्णयोः द्वौ दानवौ उत्पन्नौ जातौ, तौ नाम्नी मधुकैटभौ इत्यादि। तदातौ द्वौ मनसि विचारितौ यत् विना कार्यकारणं किञ्चिदपि कार्यमसम्भवं भवति, सर्वत्रैवायं नियमः वर्तते, आधारं विना आधेयः कथं स्थातुं शक्यते, आवयोः हृदि तु इदं निश्चितं यत् आधाराधेयभावः सर्वथा सिद्धः। अतः इदं सुखदं जलं केनोपरिस्थितो वर्तते। आवयो उत्पत्तिः कथं जातम्। आवयोः जन्मदाता पितुः कुत्र। तदनन्तरं कैटभः विचारं कृत्वा उवाच भो भ्रातर! अस्मिन् जलाशये आवयोः

सत्ता स्थापितकरणे भगवतीशक्तिरेव समर्था, यतो हि शक्तिः कदापि नष्टो न भवति अतः तस्याः सत्ता सततं तिष्ठति। सा शक्तिरेव अस्य जलस्य रचना कृता तस्या आधारोपरि एव इदं जलमस्ति। संक्षेपेणेदमस्ति यत् आकाशात् वाग्बीजं श्रुत्वा उभौ मधुकैटभौ देव्या आराधनं कर्तुं प्रारम्भः कृतः। आराधनया देवी प्रसन्ना जाता। मधुकैटभौ स्वेच्छामरणवरौ दत्तौ। तदनन्तरं गर्वेण युक्तः उभौ राक्षसौ ब्रह्मणा सह युद्धस्येच्छा जागरिता। ब्रह्मा विचारितवान् यदहं न जानामि उभाभ्यां राक्षसाभ्यां शरीरे कियान् बलं वर्तते अतः शेषशय्यामुपरि शयनं कृतं विष्णुं जागरितव्यमिति। विष्णोः ब्रह्मा स्तुतिं कर्तुमारब्धः। परञ्च ब्रह्मणः स्तुत्या विष्णुः जागरणं न जातं कथं विष्णो उपरि योगनिद्रायाः प्रभावो वर्तते। योगनिद्रा भगवतो विष्णो अधिष्ठात्री अस्ति। अतः ब्रह्मा भगवती योगनिद्रायाः स्तुतिं कर्तुमारब्धः। तस्या स्तुतेः केचन श्लोका अत्र दीयते----

**देवी त्वमस्य जगतः किल कारणं हि ज्ञातं मया सकलवेद वचोभिरम्ब ।**
**यद्विष्णुरप्यखिललोक विवेककर्ता निद्रावशं च गमितः पुरुषोत्तमोऽद्य ।।०।।**
**कस्मादिमौ प्रकटितौ किल कालरूपौ यद्वा भवानि हसितुं नु किमच्छसे माम् ।**
**ज्ञातं मया तव विचेष्टितमद्भुतं वै कृत्वाऽखिलं जगदिदं रमसे स्वतन्त्रा[१] ।।०।।**

१- देवीभागवत स्क०१ अ०६ श्लोक २७,४४।

**लीनं करोषि सकल किल मां तथैव हंतुं त्वमिच्छसि भवानि किमत्र चित्रम् ।**
**कामं कुरुष्व वधमद्य ममैव मातर्दुःखं न मे मरणजं जगदम्बिकेऽत्र ।।०।।**
**उत्तिष्ठ देवि कुरु रूपमिहाद्भुतं त्वं मां वा त्विमौ जहि यथेच्छसि बाललीले ।**
**नोचेत्प्रबोधय हरिं निहनेदिमौ यस्त्वत्साध्यमेतदखिलं किल कार्य जातम्[1] ।।०।।**

ब्रह्मणः स्तुतिं पश्चात् तामसी निद्रादेवी विष्णोः विग्रहात् निः सृत्य पार्श्वतः संस्थिता। मधुकैटभसंहाराय भगवती योगनिद्रा एवं कृता। ततः ब्रह्मा विष्णोः परिक्रमा कृता। पुनः विष्णुना सह तयोः युद्धं जातः मधुकैटभयोः वधमपि विष्णोः कृतम्। कथनस्य तात्पर्यमिंद यत् विष्णुः, शक्तेः वशीभूत इति। यदि भगवतीं प्रति भक्तिः भवति तदा सर्वं कार्य सुलभो भवति, पराकाष्ठाभक्तिरेव योगः----

**स एव भक्ति योगाख्य आत्यन्तिक उदाहृतः ।**
**येनाति व्रज्य त्रिगुणं मद्भावायोपपद्यते ।।०।।**

श्रीमद्देवीभागवते देव्या आराधना विषये सर्वत्रैव योगानुसारेण, तान्त्रिकदृष्ट्या च साधनायाः वर्णनमस्ति। योगः किम् इत्यस्मिन् विचारे द्वयोर्वस्तुनोः संयोगरूपी साध्योऽपि योगस्तथोभयोवस्तुनो एकीकारि साधनमपि योग इति उच्यते।

१- देवीभागवत स्क०१ अ०६ श्लोक ४५,४७।

योगशब्दस्याध्यात्मिकोऽर्थो जीवात्मपरमात्मनोः संयोगोऽर्थो जीवात्मपरमात्मनोः संयोगोऽथवात्मब्रह्मणोरैकात्मय-मथवा नरनारायणयोर्मिलनथवा जीवशिवयोरेकभावोऽथवा शिवशक्तयो सामरस्यमथवा प्राणापानयोश्चन्द्रसूर्ययोर्वा संयोगोऽथवा चित्तचैतन्ययोरेकीकारणमित्यादिशब्दैर्विभिन्नयोग-मतेषु प्रकटयत। अस्मिन् योगे समतायाः मुख्यतास्ति।

श्रीमद्देवीभागवते यत् शक्तितत्त्वं तदेव परमतत्त्वमस्ति। एकामेवाद्वयतत्त्वमखण्डं सदपि व्यवहारभूमावुपासकानां दृष्टिकोणभेदेन ब्रह्मरूपं परमात्मरूपं भगवद्रूपं वा भिन्नं भिन्न मुच्यतेऽनुभूयते चाज्ञानिनो दृष्ट्या परमतत्त्वं ब्रह्मरूप आत्मनं प्रकटयति, योगिनोदृष्ट्यां परमात्मरूपे भक्तस्य च दृष्ट्यां भगवद्रूपे तत्प्रकाश्यते। एतेषां त्रिविधरूपाणां निरूपणमग्रे लिखामि----

**ब्रह्मरूपम्**

ब्रह्मादृष्टिरभेददृष्टिः ब्रह्म निर्गुणं निराकारं निष्कलं निःशक्तिं निर्विशेषमव्यक्तं देशकालाद्यपरिच्छिन्नं सच्चिदानन्दरूप-मखण्डं वस्तु इति, ब्रह्मणः स्वरूपस्य यः प्रकाशेऽस्ति तस्मिन् द्रष्ट्रदर्शन दृश्यानां पृथगस्तित्वं न वर्तते। स्वयं प्रकाशं

सत्यं शुद्ध चैतन्यं स्वप्रकाशेनैवात्मनं प्रकाशयति। तच्चिचरस्थिर-मपरिणामि कूटस्थं नित्यं च तस्य स्वरूपे सच्चिदानंदाशत्रयेषु किमपि व्यवधानं नास्ति।

**परमात्मरूपम्**

परमात्मन ईश्वरस्य चैकस्येवात्मनो द्वौ शक्तियुक्तावस्थौ स्तः। बहिर्मुखी मायाशक्तियुक्त आत्मेश्वरोऽस्ति। तस्यैवांशेन विशिष्ट आत्मा जीवोऽस्ति। मायेति भेदशक्तिरत एवेश्वरजीवौ परस्परभिन्तौ।

अन्तर्मुखी मायाशक्तयार्थाद् महामायाया युक्त आत्मैव परमात्माख्यः। तस्याः महामाया शक्तेरांशिकविकाससम्पन्न आत्मामुक्त पुरुषः। अतो मुक्तपुरुषः परमपुरुषश्चाथवा परमात्मा परस्परमभिन्नादर्थात् भेदाभेदसम्बन्धेन युक्तो स्तः।

परमात्मा ज्योतिस्वरूपः, शक्तिः ज्योतिस्वरूपा, स न साकारो न च ब्रह्मवन्निराकारो यतो ज्योतिरप्येकाकारम्। मुक्तपुरुषवत् परमात्मापि देहस्थिते शून्यप्रदेशे प्रकाशमान-स्तिष्ठति।

## भगवद्रूपम्

भगवद्रूप आनन्दमयः, स नित्यः कालातीतः निर्विकारश्च, एतद्रूपेण यो नियमकस्तथा कर्मफलदाता जीवश्च नियम्यस्तथा कर्मफलभोक्ता। अस्यानन्दमयस्य करुणमयस्य च रूपस्यैवावतारो भवन्ति। तं चिद्घन विग्रह इत्याहुः। स अस्य परमरूपो यं सर्वे केचिन्न द्रष्टुं शक्नुवन्ति।

(१) ज्ञानयोगः (२) उपासना योगः (३) कर्मयोगः। इति त्रिषुमुख्यविभागेषु कृतं विभजनं वेदस्य (१) ज्ञानकाण्डस्य, (२) उपासनाकाण्डस्य (३) कर्मकाण्डस्य चानुरूपम्।

## ज्ञानयोगः

यदि योगोऽर्थादातमब्रह्मणोरेकभावो ज्ञानमार्गेण सिद्ध्यते तदा ज्ञानयोग इत्युच्यते। योगशब्द सदृशं ज्ञानशब्दोऽपि द्वयर्थयोर्द्योतकः। ज्ञायते यत्तज्ज्ञानमित्यर्थाद्यनित्यं त्रिगुणातीतं सच्चिदानन्दमयं ब्रह्म तस्य साक्षात्कारोऽपरोक्षानुभूतिर्वा ज्ञानमिति कथ्यते। तथा येन तज्ज्ञानं साधितं स उपायोपि ज्ञानशब्देन निर्दिश्यते-- ज्ञायतेऽनेन इति ज्ञानम्। एवं करणवाच्येन ज्ञानशब्दं सिद्धं वा ज्ञानस्य सधनाभूतनज्ञानपि ज्ञानशब्दान्तर्गतान्मन्यते।

## उपासना योगः

एकप्रतयस्य प्रवाहकरणमर्थाच्चित्तवृत्तयः सर्वतः संहर्य केवलमेकस्मिन् लक्ष्ये स्थापनमित्युपासना। उपासनायाः प्राणः प्रेमोऽथवा भक्तिस्तस्याः शरीरं योगः। यदोपासनाया मुख्यं लक्ष्यं केवलं शुद्धपरमतत्त्वस्य प्राप्तिरस्ति तदा सोपासनायोगसंज्ञा। चित्तं कस्मिंश्चिद्विशेषे ध्येये स्थापयित्वा शुद्धपरमात्मस्वरूपप्राप्तौ यत्नकरणमेवोपासनायोग इत्यमिधीयते। एतैकाग्रतारूपोपासना सम्प्रज्ञातसमाधिं सम्प्रज्ञातयोगं वा मन्यते। तदनन्तरं या सर्ववृत्ति-निरोधे सति शुद्धपरमात्मस्वरूपेऽवस्थितिः स ज्ञानयोग इति।

योऽखण्डोऽद्वितीयश्च ब्रह्मस्वरूपो ज्ञानयोगेऽभिन्नरूपेणा-नुभूयते तस्य प्रकाश उपासनायोगभूमौ भिन्नाभिन्नरूपेण भवति। तथैकस्तथां रूपः परमात्मा देहस्याधिष्ठातृनियन्त्रीश्वररूपेऽधि-ष्ठितस्तत्काले च तस्यांशरूपो जीवात्मा तस्या परमसत्ताया उपासकरूपे तिष्ठति। एवोपासनैव योग इति। अस्याः स्थानं हृदयाकाशः। जीवात्मा यदात्मानं परमात्मरूप उपलभते तदैव योगः सम्पूर्णः। पूर्णयोग एव परमात्म संयुज्यमिति।

**कर्मयोगः**

कर्म द्विविधं-बन्धहेतु मोक्षहेतु च। यत्कर्म स्वार्थभावेनार्थन्न परेभ्यः केवलं स्व सुखाय क्रियते तथा सक्तजेरर्थात्फलापेक्षाया वर्जितं नास्ति। तत्कर्म बन्धनकारणम्। शुक्लकृष्ण मिश्रनामभ्यस्त्रि विधेभ्यः कर्मभ्यस्तनुरूपा नानाविधा गतिः प्राप्यते। शुक्लकर्मपुण्यमितियेन देवलोके दिव्यदेहं धृत्वा वासनानुसारमानन्दभोगास्वादनं भुज्यते। कृष्णकर्मणा पापेन वा निम्नलोकान् गम्यते। मिश्रकर्मभ्यो मध्यलोके मनुष्यदेहमुपलभ्यते। एतदेवसंसार बन्धनम्। परन्तु यत्कर्म न पुण्यरूपं न पापरूपं न च मिश्ररूपं किन्तु कर्तव्यरूपं तथेश्वराय समर्पितं त्यक्तफलं निष्काम भावेन क्रियते तदेवकर्म कर्मबन्धनेभ्यो मुक्तिं ददाति। तदेव कर्म कर्मयोग इति।

श्रीमद्देवीभागवतस्य चतुर्थस्कन्धस्याष्टादशोऽध्याये भाराक्रान्ता पृथ्वी भगवतन्तं शरणं गमनकाले योगमायाया आश्वासनमस्ति। भगवती आनन्दस्वरूपिणी आदिशक्तेः मनसि सृष्टे इच्छा उत्पन्ना अभूत्। एकदा पृथ्वी दुष्टानां भारेण भाराक्रान्ता जाता। सा गोरूपधारणं कृत्वा अश्रुपातं कृतवती स्वर्गे अगच्छत्। इन्द्रः पप्रच्छ यत् भो वसुन्धरे! कथं भयभीतोऽसि। तदा पृथ्वी उवाच भो इन्द्र! महान् पापी

जरासन्धः मगधे तथा शिशुपालः चेदिदेशे स्वामीभूत्वा तिष्ठति येनाहं भयभीता आगता ततः इन्द्रः पृथ्वीं ब्रह्मणः पार्श्वे प्रेषिता। ब्रह्मा विष्णुः पार्श्वे पृथिव्या सह गमनं कृतम्। तत्र विष्णोः स्तुतिं ब्रह्मा कृतः। तदा विष्णुः प्रसन्नो जातः पृष्टः भो ब्रह्मन् कथमागतः। ब्रह्मा उवाच भो विष्णो! पृथ्वी भाराक्रान्ता अतः अतिदुःखिता वर्तते, अतः तस्या भारः दूरीं कुरु। विष्णु उवाच भो ब्रह्मन्! अहमस्मिन् विषये परतन्त्रोऽस्मि, अहमेव न परञ्च सर्वे (शिवादयः) स्वतन्त्रता रहितो वर्तन्ते। इदं सम्पूर्णचराचरजगत् योगमायाया अधीनमस्ति अतः सर्वं कार्य ते एव करिष्यन्तीति। योगदृष्ट्या तस्या मायायाः शक्तेः मणिद्वीपे दर्शितं मया शिवेन सह। सैवाद्भुतशक्तेः चिन्तनं कर्तव्यम्। सा योगमाया आद्याशक्तिः कल्याणमयी, सम्पूर्ण अभीष्ट प्रदानकर्त्री, मायास्वरूपिणी पार्श्वेगन्तव्यम्। परब्रह्मणः तस्या अभेद सम्बन्धः वर्तते, अतः सा योगमाया योगेनावागम्यते। तदनन्तरं भगवत्याः भुवनेश्वर्याः योगेन स्मरणं कृतम्। स्मरणे जाते सत्यपि भगवती भुवनेश्वरी साक्षात् तेषां सम्मुखे प्रकटिता। योगमायायाः श्रीविग्रहः रक्तमासीत्। देवीं भगवतीं दृष्ट्वा सर्वेदेवाः स्तुतिमकरोत्। सा योगमायाः स्तुति इत्थम्----

**महालक्ष्म्यै च विग्रहे सर्वशक्त्यै च धीमहि ।**
**तन्नो देवी प्रचोदयात् ।।०।।**

मातर्नतास्म भुवनार्ति हरे प्रसीद
शं नो विधेहि कुरु कार्यमिदं दयार्द्रे ।
भारं हरस्व विनिहत्य सुरारि वर्गं
मह्या महेश्वरि सतां कुरु शं भवानि ।।०।।
यद्ययंबुजाक्षि दयिसे न सुरान्कदचित्
किं ते क्षमा रणमुखेऽसिशरैः प्रहर्त्तुम् ।
एतत्त्वयैव गदितं ननु यक्षरूपं
धृत्वा तृणं दह हुताशपदाभिलाषैः ।।०।।
कंसः कुजोऽथ यवनेन्द्र सुतश्च केशी
बार्हद्रथो बकबकीखर शाल्व मुख्याः ।
येऽन्ये तथा नृपतयो भुवि संति तास्वं
हत्वा हरस्व जगतो भरमाशुमातः ।।०।।
शक्तिं विना हरिहर प्रमुखाः सुराश्च
नैवेश्वरा विचलितुं तव देवि देवि ।
किं धारणाविरहितः प्रभुरप्यनन्तो
धर्तुं धरां च रजनीशकलावतंसे[1] ।।०।।

स्तुत्या योगमाया भगवती प्रसन्ना जाता सर्वेदेवान् आज्ञा दत्तवती यत् सर्वे पृथिव्यामुपरि गत्वा स्व स्व कर्तव्यपालनं कुरु। योगमाया इदं कथयित्वा अन्तर्ध्यानवती जाता। सर्वेदेवा तां योगमायामादेशं प्राप्य स्व स्व कर्तव्यपालने तत्पराः येन सर्वेषां दानवानां, दुष्टानां संहारमभूत्। तदा पृथिव्या भारं समाप्तं जातं येन सर्वे सुखिनो भूत्वा योगमायां ध्यानं, पूजां

१- श्रीमद्देवीभागवत स्क०४ अ०१९ श्लोक सं० १४,१५,१६,१८।

अर्चनां च करोतिस्म।

**तन्त्रोक्तसंध्या, मुद्राप्रभृतीनां देवीभागवते ।
कीदृशमुपस्थापनमितिपर्यवेक्षणम् ।।**

श्रीमद्देवीभागवतस्यैकादशस्कन्धस्याष्टमोऽध्याये तन्त्रोक्त संध्यानां मुद्राप्रभृतीनाञ्च विशदं विवेचनं वर्तते। तस्याध्ययनं कृत्वा तस्योपस्थापन कीदृशमस्ति इत्यस्य पर्येवक्षणमग्रे क्रियते- प्रथमस्तु भूतशुद्धिः कीदृशी भविष्यति----

तान्त्रिकाः, साधकाः, साधारणजनाश्च एवं प्रकारेण भूतशुद्धिः कर्तव्यम्। प्रथमस्त्पिदं चिन्तनं कर्तव्यं यत् देवि भगवती कुण्डलिनीमूलाधारात् उत्थित्वा सुषुम्णामार्गात् ब्रह्मरन्ध्रपर्यन्तं जगाम। तदनन्तरं साधकाः पुरुषाः ''सोऽहं'' अनेन मन्त्रेण जीवस्य ब्रह्ममणि संयोजनं क्रियतामिति। स्वशरीरे इयं भावना कर्तव्या यत् पादात् जानुपर्यन्तं पृथिव्यास्थानं ममशरीरे विद्यते। अयं पृथिव्या स्थानः चतुरस्त्रो वर्तते। वज्रस्य चिह्नेन युक्तः तथा पीतवर्ण अस्ति। तस्मिन् चतुरस्त्रे कोणे ''ल'' बीजमङ्कितं कर्तव्यम्। जानोः नाभि पर्यन्तं भागं जलस्य स्थानं मत्वा इयं भावना कर्तव्या यत् अस्य आकृति अर्द्धचन्द्रस्य समानमस्ति। अस्मिन् द्वौ कमलचिह्नौ अङ्कितौ वर्तेते। अस्य

वर्णः शुल्कः वर्तते। इदं जलमण्डलं ''बं'' अनेन बीजमन्त्रेण अङ्कितोऽस्ति। नाभितः कण्ठपर्यन्तभागं भावनाद्वारा त्रिकोणाकार अग्निमण्डलस्य रूपे दृश्यमानः वर्तते। तस्य वर्णः रक्तः, तस्मिन् मध्ये स्वस्तिको चिह्नः वर्तते। स ''रं'' बीजेन युक्तः, इदं चिन्तनं कर्तव्यम्।

अग्रे श्लोकैः वर्ण्यते---

ह्रदो भ्रूमध्यपर्यन्तं वृतं षडविंदुलांछितम् ।
''यं'' बीजयुक्तं धूम्राभं नभस्वन्मण्डलं स्मरेत् ।।०।।
आब्रह्मरन्ध्र भूमध्याद्वतं स्वच्छं मनोहरम् ।
''हं'' बीजयुक्तमाकाश मंडलं च विचिंतयेत् ।।०।।
एवं भूतानि संचिन्त्य प्रत्येकं सविलापयेत् ।
भुवं जले जलं वह्नौ वह्निं वायौ नमस्यमुम् ।।०।।
विलाप्यखमहंकारे महत्तत्वेऽप्यहं कृतिम् ।
महान्तं प्रकृतौ मायामात्मनि प्रविलापयेत् ।।०।।

अनेन प्रकारेण परमज्ञानेन सम्पन्नो भूत्वा अनेक जन्मेषु संचितं पापसमुदायस्य एकंपुरुषस्य रूपे चिन्तनं कर्तव्यम्। अयं पापपुरुषः वामकुक्षौ तिष्ठति। अंगुष्ठपरिमाणमात्रं स पापपुरुषः कृष्णवर्णस्यास्ति। ब्रह्महत्या तस्य शिरोभागः। कनकस्तेयं तस्य बाहू। मदिरापान हृदयं, गुरुतल्पकटीयुतम् तत्संसर्गिपदद्वन्द्व उपपातक मस्तकम् , सः स्वहस्तयोः

खड्गचर्मधरयुक्तम् , तस्य शरीरस्य वर्णः कृष्णः, तस्य दुःसहपापपुरुषस्या ननं अधः व्रर्तते इति चिन्तनीयम्। तदनन्तरं वायुबीजं ''यं'' स्मरणं कृत्वा पूरकप्राणायामेन वायुं विशोपयेत्। तेन वायुना अस्य पापपुरुषस्यशरीरं शुष्कं कृत्वा पुनः ''रं'' वह्नि बीजेन अग्निं प्रकटयित्वा तं पापपुरुषं भस्मी करणीयम्। तदनन्तरं कुम्भक प्राणायामेन चिन्तनीयम् यदयं पापपुरुषः भस्मी अभूत्। पुनः दग्धं पापपुरुषं ''यं'' इति जपेन रेचकप्राणायामेन वहिः निः सरेत्। तदनन्तरं विद्वान् पुरुषः स्वशरीरादुत्पन्नं भस्मं सुधाबीजं ''वं'' इत्युच्चारणं कृत्वा प्रकटितं यदमृतमस्ति तेन संप्लावयेत्। ततः भू बीज ''लं'' द्वारा एकत्रीकृत्य भस्म तत्कनकांडवत् कर्तव्यम्। तदनन्तरं-

**विशुद्धमुकुराकारं जपन्बीजं विहायसः ।**
**मूर्धादिपादपर्यन्तान्यंगानि रचयेत्सुधीः ।।०।।**
**आकाशादीनि भूतानि पुनरुत्पादयेच्चितः ।**
**सोऽहं मंत्रेण चात्मानमानयेद्धदयांबुजे ।।०।।**
**कुण्डलीजीवमादायपरसंगात्सुधामयम् ।**
menLeelle ù oÜeecY eepesoetieeOeej ielesbmoej Seed[1] ।।०।।

---

१- देवीभागवत स्क०११ अ०८ श्लोक सं० १६,१७,१८।

अत इदमायातं यत् हृदयरूपीकमलदलोपरि स्थापितता मूलाधारे विराजमाना देवी कुण्डलिन्याः ध्यानं कर्तव्यमिति। ध्याने किं भविष्यति श्लोकेन वर्ण्यते----

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
शूलं कोदण्डभिक्षूद्भवमणिगुणमप्यंकुशं पंचवाणान् ।
विभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवीवालार्कवर्णा भवतुसुखकरी प्राणशक्तिः परा नः[1] ।।०।।

अनेन प्रकारेण परमात्मस्वरूपिणीं प्राणशक्तिं देवीं कुण्डलिनीं ध्यानं कृत्वा सम्पूर्णकायेष्वधिकारप्राप्त्यर्थं भस्मधारणं कर्तव्यम्। विभूतिधारणस्य महत्फलमस्ति। अग्रे संध्योपासनस्योत्तम वर्णनं तंत्रोक्त विधिना विधास्यामि----

संध्योपासनस्य प्रकारः त्रयः वर्तन्ते। (१) प्रातः कालीन संध्या, (२) मध्याह्नकालीन संध्या, (३) सांयकालीन संध्या।

प्रातः संध्या सनक्षत्रां मध्याह्ने मध्यभास्कराम् ।
ससूर्यां पश्चिमां संध्या तिस्रः संध्या उपासते[2] ।।०।।

१- दे०भा०स्क०११अ०८ श्लो०सं०१९। | २- दे०भा०स्क०११अ०१६ श्लो०२।

संध्यानां भेदान् वर्णयामि---

उत्तमातारकोपेता मध्यमालुप्ततारका ।
अधमा सूर्यसहिता प्रातः संधा त्रिधा मता ।।०।।
उत्तमा सूर्यसहिता मध्मा स्तमिते रवौ ।
अधमातारकोपेता सायं संध्या त्रिधा मता[१] ।।०।।

विप्रोवृक्षो मूलकान्यत्र संध्या
वेदः शाखा धर्मकर्माणि पत्रम् ।
तस्मान्मूलं यत्नतो रक्षणीयं
छिन्ने मूले नैव वृक्षो न शाखा ।।०।।

सांयकालीन संध्यायाः त्रिप्रकारः, विप्र एकः वृक्ष, तस्य वृक्षस्य मूलानि संध्या, वेदाः शाखाः, धार्मिककृत्याः पत्राणि, अस्माद्धेतो मूलस्य यत्नतः रक्षयितव्यम्। यदि मूलः छिन्नो भवति तदा न वृक्ष एव स्थातुं शक्यते न शाखाऽपि, अतः मूलस्य रक्षा अनिवार्यमस्ति।

संध्या येन विज्ञाता संध्या येनानुपासिता ।
जीवमाना भवेच्छूद्रो मृतः श्वा चैव जायते[२] ।।०।।

१- देवी भागवत स्क०११ अ०१६ श्लोक ४,५,६।
२- देवी भागवत स्क०११ अ०१६ श्लोक ७,९।

यः विप्रः संध्याज्ञानं न करोति अर्थात् संध्यां न करोति, स द्विज शूद्रसमानो भवेत् , जन्मान्तरे सः श्वा भवति। अतः द्विजं नित्योत्तम संध्योपासना कर्तव्यमिति। संध्योपासनाया अभावे कश्चिदपि शुभकर्मणि तस्याधिकारो नास्ति।

**उदयास्तमयादूर्ध्वं यावत्स्याद्घटिका त्रयम् ।**
**तावत्संध्यामुपासीत प्रायाश्चित्तं ततः परम् ।।०।।**

संध्यासमय व्यतीतेसति चतुर्वारमर्ध्य प्रदातव्यमथवा अष्टशतं गायत्रीजपं कृत्वा तदनन्तरं संध्योपासनं कर्तव्यम्। गृहे संध्या साधारणा, गोशालायां सन्ध्या मध्यमा, नद्यायास्तटे संध्या उत्तमा श्रेण्यामागच्छति। देवालये कृता संध्या उत्तमोत्तमा भवति एष प्रकारः। ये भगवत्या देव्याः उपासका तेषां कृते तु देव्या पार्श्वे एव संध्याकरणं श्रेष्ठमुच्यते। त्रैकालिकसंध्याकरणेन अनन्तफलं प्रोप्नोति। गायत्रीदेव्या अतिरिक्तं विप्राय अन्यः कोऽपि देवः नास्ति। श्रुतेः वचनमिदं यत् गायत्री उपासना समानं ब्राह्मणाय विष्णुः शिवोपासना अपि नास्ति। देव्याः गायत्र्या उपासना सम्पूर्णवेदानां सारः। ब्रह्मादयः देवा अपि सांध्यकाले गायत्र्याः ध्यानं जपञ्च कुर्वन्ति। वेदाः गायत्री नित्यं जपन्ति, अतः अस्या गायत्र्याः नाम ''वेदोपास्या''

अस्ति। गायत्रीदेवी एव वेदस्य माता तथा आद्याशक्तिः वर्तते अत अस्या उपासना परमावश्यकी वर्तते।

## संध्यायाः विधिक्रमः

शुद्धसनोपरि उपविश्य "ॐ केशवाय नमः" इत्यादि नाम्नामुच्चारणं कृत्वा आचमनं कुर्यात् ततः प्राणायामः, तदनन्तर संध्योपासनादि क्रियायां प्रवृत्तो भवितव्यम्। प्रत्येकाङ्गस्म स्पर्शविधिः वर्तते तां विधिं श्लोकैः पूर्यते----

हृषीकेशः पद्मनाभो दामोदर अतः परम् ।
संकर्षणो वासुदेवः प्रद्युम्नोऽप्यनिरुद्धकः ।।०।।
पुरुषोत्तमाऽधोक्षजौ च नारसिंहोऽच्युतस्तथा ।
ऊँकारपूरकं नाम चतुर्विंशति संख्यया ।
स्वाहान्त प्रोशयेद्वारि नमोन्तैः स्पर्शयेन्तथा ।।०।।
केशवादि त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
मुखं प्रक्षालयेद्द्वाभ्यां द्वाभ्यामुन्मार्जनं तथा ।।०।।
एकेन पाणी संप्रोक्ष्य पादावपि शिरोपि च ।
संकर्षणादि देवानां द्वादशांगानि संस्पृशेत् ।।०।।
दक्षिणेनोदकं पीत्वा वामेन संस्पृशेत् बुधः ।
तावन्न शुध्यते तोऽयं यावद्वामेन न स्पृशेत्[1] ।।०।।

---

१- श्रीमद्देवीभागवत स्क०११ अ०१६ श्लो० २१,२२,२३,२४,२५।

आचमन विधानस्य बहवः श्लोकाः वर्तन्ते परन्तु विस्तरभयादत्र न दीयते, अथानन्तरं प्राणायामस्य विधानं संक्षेपेणैव प्रस्तूयते---

प्राणायमं कर्तुं समये प्रथमतः प्रणवस्योच्चारणं कृत्वा तुरीयपदेन सह गायत्र्या उच्चारणं कर्तव्यम्। नासिकायाः दक्षिण छिद्रात् वायोः रेचनं, वामेन पूरितोदरं, कुंभेन नित्यं वायुं धारयेत् , अस्य प्रकारस्यैव पण्डितपुरुषाः रेचकं, पूरकं, कुम्भकं प्राणायममुच्यते। वायुमाकर्षणसमयेदक्षिण नासिकां अंगुष्ठेन पीडयेत्। तदनन्तरं कनिष्ठिकाअनामिकाभ्यां वामनासिकां पीडयेत् , मध्ममाततर्जनीं च त्यजेत्। सम्पूर्ण शास्त्रेषु योगिभिर्यतमानसैः अनेनप्रकारेणैव रेचकं कुम्भकं पूरकं प्राणायाममुच्यते, यः वायोः सृजनं करोति। स रेचकः, यः पूर्णं करोति स पूरकः, यः साम्येन संस्थिति तत् कुम्भकः प्राणायामं परिकीर्तितः। पूरक प्राणायामं कर्तुं समये नीकमलदलसमानं श्यामसुन्दर चतुर्भुजविष्णोः नाभिदेशे ध्यानं कर्तव्यम्। कुम्भकं प्राणायामं कर्तुं समये हृदिस्थाने प्रजापतिं चतुर्वक्त्रं कमलासने स्थितं पितामहं ध्यायेत्। शुद्धस्फटिक संकाशं निर्मलं पापनाशनं महेश्वरं रेचकप्राणायाम समये शंकरे ललाटस्थं ध्यायेत्।

अनेन प्रकारेण प्राणायाम करणेन मानवानां कृते को लाभः तं वर्ण्यते----

पूरके विष्णु सायुज्यं कुम्भके ब्रह्मणो गतिम् ।
रेचकेन तृतीयं तु प्राप्नुयादीश्वरं परम्[१] ।।०।।

अत्र पर्यन्तं पौराणिकमाचमनस्य विधिः समुपस्थापिता, अग्रे श्रोताचमनस्य विधिः दीयते----

प्रणवं पूर्वमुच्चार्य गायत्रीं तु तदित्यृचम् ।
पादादौ व्याहृति तिस्त्रः श्रौताचमन मुच्यते ।।०।।
गायत्रीं शिरसासार्धं जपेत्व्याहृति पूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राण संयमः[२] ।।०।।

अनयोः श्लोकयोः लक्षणसहितं प्राणायामस्य वर्णनं कृतम्। अयं प्राणायामः पापानां संहारं करोति तथा शुभपुण्यफल प्रदानं करोति।

अग्रे अन्यपक्षरीत्या प्राणायामस्य मुद्रायाः वर्णनं विधास्यते--- अन्यपक्षस्यायं सिद्धान्तः वानप्रस्थगृहस्थयोः पंचागुलीभिर्नासाग्रं प्रणवेन तु पीडयेत् एषा मुद्रा सर्वपापहरा

१- देवीभागवत ११।१६।३६

२- देवीभागवत ११।१६।३८,३९।

अस्ति। यतेश्च ब्रह्मचारिणः यतेश्च कनिष्ठिका अंगुष्ठयोः प्राणायामं कुर्यात्। आपोहिष्ठेति मंत्रेण तिसृभिः ॠचाभिः कुशोदकैः प्रोक्षणं स्यात् अथवा तिसृषुः ॠचासु यानि नवपदानि सन्ति तस्यादौ प्रणवस्योच्चारणं कृत्वा तैः मार्जनं कुर्यात्। अनेन मार्जनेन एकवर्षात् संचितानि यानि पापानि सन्ति तानि नष्टानि भवन्ति। तत्पश्चात् सूर्यश्चेति मन्त्रेणाचमनं कुर्यात् , स आचमनं अन्तः करणस्य ये पापाः तेषां अन्तं करोति।

**आपोहिष्ठेति सूक्तेन मार्जनं चैव कारयेत् ।**
**उधृत्य दक्षिणेहस्तं जलं गोकर्णवत्कृते ।।०।।**
**पीत्वा नं नासिकाग्रं तु वामकुक्षौ स्मरेदघम् ।**
**पुरुषं कृष्णवर्णं च ऋतं चेति पठेत्ततः ।।०।।**
**द्रुपदं वा ऋचं पश्चादृक्षनासा पुटेन च ।**
**श्वासमार्गेण तं पापमानयेत्करवारिणी ।।०।।**
**नावलोक्यैव तद्वारि वामभागेऽश्मनि क्षिपेत् ।**
**निष्पापं तु शरीरं मे संजातमिति भावयेत्[1] ।।०।।**

गायत्र्याः मन्त्रेण जलं अभिमन्त्रितं कृत्वा त्रीणी अञ्जलिना अर्घ्यं दद्यात् तत उपासकाः सूर्यस्य मन्त्रां पठित्वा सूर्यस्य प्रदक्षिणां कुर्यात्। मध्याह्नसमये प्रदक्षिणा एक वारं कर्तव्यम्।

---

१- देवीभागवत स्क०११ अ०१६ श्लोक सं०४५,४६,४७,४८।

अर्घ्यदानं कथं इति विषयोपरि श्रीमद्देवीभागवतस्य एकादशस्कन्धस्य षोडशोऽध्याये वृहदवर्णनं विद्यते परन्तु संक्षेपेणैवात्र लिख्यते----

महेन्द्रनामकस्य महापराक्रमी त्रिशत्कोटिराक्षसाः सन्ति। ते कृतघ्नानां राक्षसानामाकृति अत्यन्त भयंकरा अस्ति। ते सूर्यं भक्षणं कर्तुमिच्छति, एषां परिस्थित्यां तपमेव यस्य धन मस्ति एताः ऋषिमुनिगणाः भगवती महासध्यायाा उपासनां कुर्वन्ति। तस्मिन्समये एव जलाञ्जलिना अर्घ्यं ददति। स अर्घ्यः अर्थात् तं जलं वज्रसमानमस्ति येन ते राक्षसाः भस्मीभूताः भवन्ति। अस्मात्कारणादेव द्विजाः संध्योपासनं कुर्वन्ति। इयं सन्ध्योपासनादिक्रिया महत्पुण्यजननी विद्यते। अर्घ्यदानस्य इदं मन्त्रं विद्यते येनोच्चारणमात्रेण साङ्गोपाङ्गं संध्यायाः फलं प्राप्नोति।

**सोऽहयर्कोऽस्महं ज्योतिरात्मा ज्योतिरहं शिवः ।**
**आत्मज्योतिरहं शुल्कः सर्वज्योति रसोऽस्म्यहम् ।।०।।**
**आगच्छ वरदे देवि गायत्री ब्रह्मरूपिणी ।**
**जपानुष्ठान सिद्ध्यर्थं प्रविश्य हृदयं मम ।।०।।**
**उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।**
**अर्घ्येषु देवि गन्तव्यं प्रविश्य हृदयं मम[१] ।।०।।**

---

१- देवीभागवत स्क०११ अ०१६ श्लोक सं०५८,५९,६०।

अनेन प्रकारेण अर्घ्यं दत्वा पवित्रस्थाने उपविश्य आसनं गृह्यताम् , तत्रोपविश्य वेदमातागायत्र्याः जपं कुर्यात्। प्राणायामस्य पश्चात् इयमेव खेचरीमुद्रायाः विधानमस्ति। प्रातः संध्यासमये अस्याः मुद्रायाः आवश्यकता अस्ति। यस्य प्रभावेण चित्तः तथा जिह्वा आकाशे गत्वा विचरणं कुर्वन्ति। तस्य नाम खेचरी इति। सहैव यस्य प्रेरणया दृष्टिः भ्रुवोरंतर्गता मुद्रा खेचरी इत्युच्यते।

**न खेचरी समा मुद्रा सत्यं सत्यं च नारद ।**
**घंटावत्प्रणवोच्चाराद्वायुं निर्जित्य यत्नतः ।।०।।**
**स्थिरासने स्थिरो भूत्वा निरहंकार निर्भयः ।**
**लक्षणं नारदमुने श्रृणु सिद्धासनस्य च[1] ।।०।।**

सिद्धासनं किम् तदुच्यते----

**योनिस्थानकमघ्रिमूलघटितं कृत्वा दृढं विन्यसे ।**
**न्मेढ्रे पादमर्थकमेव हृदये कृत्वा समं विग्रहम्**
**स्थाणु संयमितेन्द्रियोऽचलदृशापश्यन्भ्रुवोरन्तरं ।**
**तिष्ठत्येतदतीव योगिसुखदं सिद्धासनं प्रोच्यते ।।०।।**

---

१- श्रीमद्देवीभागवत स्क०११ अ०१६ श्लोक सं०६५,६६,६७।

अतः परं गायत्र्या आवाहनं ध्यानञ्च कुर्यात् , ध्यानस्य मन्त्राणि-----

आयातु वरदा देवि अक्षरं ब्रह्मसम्मितम् ।
गायत्री छन्दसां मातरिदं ब्रह्म जुषस्वमे ।।०।।
यदह्नात् कुरुते पापं तदह्नाहत् प्रतिमुच्यते ।
यद रात्रात् कुरुते पापं तद रात्रात् प्रतिमुच्यते ।।०।।
सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ।
अजरे अमरे देवि सर्वदेवि नमोस्तुते ।।०।।

अथानन्तरं न्यासविधिः वर्तते, यः सन्ध्यायाः प्रधानोऽङ्ग। अङ्गन्यासः, करन्यासः, अक्षरन्यास इति। तदनन्तरं भगवत्याः गायत्र्याः ध्यानं कर्तव्यम्---

इयं भगवती परमेश्वर्याः विग्रहः जपाकुसुमसमानं प्रतिभासम्पन्नं भूत्वा तिष्ठति। इमाः भगवती कुमार्यावस्थायां विराजमानाः सन्ति, रक्तचन्दनेनानुलिप्तः रक्तकमलस्योपरि आसीनाः सन्ति। अस्या माला रक्तवर्णा विद्यते। चतुर्मुखीद्विभुज-धारिणी रक्तवस्त्रपरिच्छिन्ना शोभायमाना दृश्यते। प्रत्येकमुखे उभौ नेत्रौ स्तः। इयं भगवती स्रुक्, स्रुवा, जप-माला एवं कमण्डलुं धारयति। इयं ऋग्वेदमध्ययनं करोति। अस्याः

१- श्रीमद्देवीभागवत स्क०११ अ०१६ श्लोक सं० ६८,६९,७०।

वाहनः हंसो भवति। ब्रह्मा स्व हृदये गायत्रीं विराजमानं कृत्वा अस्या उपासनां कुर्वन्ति। ऋग्-यजुः-साम-अथर्ववेदाः एते चत्वारः गायत्र्याः चतुष्पादाः सन्ति। पूर्व-दक्षिण-पश्चिम-उत्तर, ऊर्ध्वं, अधरं, अन्तरिक्षः, अवान्तरादि दिशाः अष्टकुक्षिभ्यः शोभां प्राप्नुवन्ति, महेश्वरी सप्तशीर्षा सन्ति, के सप्तशीर्षाः ते इमे--- व्याकरणम् , शिक्षा, कल्प, निरुक्त, ज्योतिष, इतिहासः-पुराणाश्च तथा उपनिषदाः। गायत्र्याः मुखे अग्निः, शिखायां रुद्रः, चित्ते विष्णुः शोभां प्राप्नुवन्ति। एवं प्रकारेण भगवत्याः गायत्र्याः गायत्र्याः ध्यानं कर्तव्यमिति।

**एवं ध्यात्वा विधानेन गायत्रीं वेदमातरम् ।**
**ततो मुद्रा प्रकुर्वीत देव्याः प्रीतिकराः शुभाः ।।०।।**

मुद्रायाः गणना---

**सुमुखं-संपुटं चैव विततं विस्तृतं तथा ।**
**द्विमुखं त्रिमुखं चैव चतुष्कं पञ्चकं तथा ।।०।।**
**षण्मुखाधोमुखं चैव व्यापकाञ्जलिकं तथा ।**
**शकरं यमपाशं च ग्रथितं सम्मुखोन्मुखम् ।।०।।**
**विलम्बं मुष्टिकं चैव मत्स्यं कूर्म वराहकम् ।**
**सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ।।०।।**

१- श्रीमद्देवीभागवत ११।१६।९८

२- श्रीमद्देवीभागवत ११।१६।९९,१००,१०१।

चतुर्विंशति मुद्राश्च गायत्र्याः संप्रदर्शयेत् ।
शताक्षरां च गायत्रीं सकृदावर्तयेत्सुधी ।।०।।
चतुर्विंशत्यक्षराणि गायत्र्या कीर्तितानि हि ।
जातवेदसनाम्नीं च ऋचमुच्चारयेत्ततः ।।०।।
त्र्यम्बकस्यर्चमावृत्य गायत्री शतवर्णका ।
भवतीयं महापुण्याऽसकृज्जप्या बुधैरियम् ।।०।।
ॐकारं पूर्वमुच्चार्य भुर्भुव स्वस्तथैव च ।
चतुर्विंशत्यक्षरां च गायत्रीं प्रोच्चरेत्ततः ।।०।।
एवं नित्यं जपं कुर्याद् ब्राह्मणो विप्रपुंगवः ।
स समग्रं फलं प्राप्य संध्यायाः सुखमेधते[1] ।।०।।

अग्रे सप्तदशोऽध्याये अष्टादशोऽध्याये च गायत्र्याः महिमा तथा तस्याः पूजाविधेः वर्णनं विद्यते, यस्य वर्णनेन प्रबन्धकलेवर विस्तृतो भविष्यति अतः अतिसंक्षेपेणैव वर्णनं करिष्ये----

भिन्नपादा गायत्री ब्रह्महत्यायाः शमनं करोति, अभिन्न पादागायत्री ब्रह्महत्यां प्रयच्छति, धर्मशास्त्रेषु, पुराणेषु, इतिहासेषु च विविधप्रकारस्य गायत्री कथिता वर्तते। पञ्चप्रणवयुक्तां गायत्रीं जपेत्। जसंख्याष्टभागान्ते पादोजप्यस्तुरीयकः, स

१- श्रीमद्देवीभागवत ११।१६।१०२,१०३,१०४,१०५,१०६,।

द्विज परमोज्ञेयः परं सायुज्यमाप्नुयात्। सम्पुटा, षडोंकारा नाम्ना गायत्री ब्रह्मचारिणां कृते वर्तते। गृहस्थाः, मोक्षकामिनः, ब्रह्मचारिणः पुरुषाः तुरीयाः गायत्र्याः जपं कुर्यादिति। गयत्र्याः तुरीयपाद इयमस्ति---

“परो रजसे सावदोम्” अस्मिन् तुरीय पादे ब्रह्मणः ध्यानकरणेन जपस्य सम्पूर्ण फलं प्राप्तं भवति, अग्रे गायत्र्याः ध्यानस्य विधिः कथ्यते। सूर्यः, चन्द्रमा, अग्नेः तुलना कर्तुं प्रणवस्वरूपं, अचिन्त्यमयः, विकसितः, हृदयस्थकमलमेव यस्यासनं विद्यते ते ब्रह्म अचलः परमसूक्ष्मः ज्योतिस्वरूपः, एवं सच्चिदानन्दमयः सन्ति ते मम प्रसन्नतायाः साधकं भव। त्रिशूलः योनिः, सुरभिः, अक्षः, माला, लिङ्गम् , तथाम्बुजः, इमाः सप्तमहामुद्राः तुरीयागायत्रीं प्रदर्शितव्यम्। संध्यां गायत्रीमुच्यते। अस्याः रूपं सच्चिदानन्दमय अतः द्विजाय नितरन्तरमहर्निशञ्च पूजनं नमनं कर्तव्यमिति। ज्ञ पुरुषाः जले स्थित्वा कदापि गायत्र्याः जपं न कुर्यात्।

## गायत्री तर्पण कर्तुं नियमः

''गायत्री तर्पणं चातः करणीयं महामुने ।।०।।

गायत्री छन्दः, विश्वामित्र ऋषि, सविता देवता, इत्यादिकं तर्पणकरणार्थं विनियोगं कुर्यात्। ''भूः'' इत्युक्तवा ऋग्वेदपुरुषं तर्पयामि इत्युच्चारणं कर्तव्यम् तथैवाग्रे ''भुवः'' इत्यनेन यजुर्वेदस्य, ''स्व'' इत्यनेन सामवेदपुरुषं तर्पयामि, ''महः'' इत्यनेन अथर्ववेदपुरुषं तर्पयामि। ''जनः'' इत्यनेन इतिहास पुराणयोः पुरुषयोः तर्पणं करिष्यावहे। ''तपः'' इत्यनेन सम्पूर्ण आगमशास्त्राणामपि तर्पणं कर्तव्यम्। ''सत्यं'' इत्यनेन भूर्लोकसंज्ञकपुरुषस्य तर्पणमिति। ''ॐभूः'' इत्यनेन भूर्लोकसंज्ञकपुरुषस्य तर्पणं विधेयम्। ''भुवः'' इत्यनेन भुवर्लोकसंज्ञकपुरुषस्य तर्पणं कर्तव्यम्। ''स्वर'' इत्यनेन स्वर्लोकसंज्ञकपुरुषस्य तर्पणं करिष्ये। ''ॐभूः'' इत्यनेन एकपदानमगायत्र्याः तर्पणं विधेयम्। ''भुवः'' इत्यनेन द्विपदागायत्र्या तर्पणं कर्तव्यम्। ''स्वः'' इत्यनेन त्रिपदायुक्तागायत्र्याः तर्पणं विधेयम्। ''ॐभुर्भुवः'' इत्येनेन चतुष्पदागायत्र्याः तर्पणं कर्तव्यम्।[१]

---

१- श्रीमद्देवीभागवत स्क०११ अ०१७ श्लोक २०-२८ पर्यन्त।

अतः पंर उषसी, गायत्री, सावित्री, सरस्वती, वेदमात, पृथ्वी, अजा कौशिकी, साङ्कृति, सार्वजति, एषां नामानि उच्चारणं कृत्वा भभूवत्याः गायत्र्याः तर्पणं कर्तव्यम्। तर्पणं पश्चात् जातवेदो०अनेन अस्य मंत्रस्य पाठकरणामावश्यकमस्ति। विद्वान् पुरुषः शान्त्यर्थं मानस्तो केतनयोः इति मन्त्रस्य पाठं कर्तव्यम्। ''त्र्यम्बकं'' अस्यमन्त्रस्यपि पाठमावश्यकमस्ति। द्विजाय नियम अस्ति यत् प्रणामकर्तुं समये नियमानुसारं स्वणाम तथा गोत्रस्योच्चारणं कर्तव्यमिति। उपर्युक्त विधिः प्रातः कालीन सन्ध्यायः विद्यते, संध्याकर्मसमाप्ते जाते अग्निहोत्रमप्यावश्यकमस्ति। अग्निहोत्रं पश्चात् सावधानोभूत्वा पञ्चदेवानां पूजा अवश्यं करणीयम्। ते देवाइमे--- भगवती शिवा, शिवः, गणेशः, सूर्यः विष्णुश्च। श्रीमद्देवीभागवते इदमप्यस्ति यत् सर्वप्रथमं देव्याः पूजनं तदनन्तरमन्ये देवानां पूजनं कर्तव्यम्। कारणमिदमस्ति यत्--- देव्या पूजाया अधिकं पुण्यं कुत्रापि नहि दृश्यते।

**न देवी पूजनात्पूण्यमधिकं क्लचिदीक्ष्यते ।**
**नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणेश्वरम् ।।०।।**
**दूर्वाभिर्नार्चयेदुर्गां केतकेर्न महेश्वरम् ।**
**मल्लिकाजाति कुसुमं कुटजं पनसं तथा[१] ।।०।।**

---

१- श्रीमद्देवीभागवत स्क०११ अ०१७ श्लोक ३९,४०।

किंशुकं बकुलं कुदं लोध्रं तु करवीरकम् ।
शिंशपाऽपराजिता बंधूकागस्त्य पुष्पके ।।०।।
मदनं सिंधुवारं च पालाशकुसुमं तथा ।
दूर्वाङ्कुरं विल्वदलं कुशमंजरिका तथा ।।०।।
शल्लकी माधवी पुष्पमर्कमंदार पुष्पकम् ।
केतकीं कर्णिकारं च कदम्ब कुसुमं तथा ।।०।।
पुन्नागश्चम्पकस्तद्वद्यूपिका तगरौ तथा ।
एवमादीनि पुष्पाणि देविप्रियकराणि च ।।०।।
गुग्गुलस्य भवेद्धूपो दीपः स्यात्तिलतैलतः ।
कृत्वेत्थं देवतापूजां ततो मूलमनुं जपेत् ।।०।।
एवं पूजासमाप्यैव वेदाभ्यासं चरेद्बुधः ।
ततः स्ववृत्या कुर्वीत पोष्यवर्गार्थसाधनम्[1] ।।०।।

## देव्याः जगदम्बायाः पूजायाः विशेषविधिः

भगवती जगदम्बायाः या पूजाविधिः श्रीमद्देवीभागवतेऽस्ति तया विधया यदि देव्याः पूजनं भवेत् तर्हिं मानवाः जीवनं अतिसुखदं व्यतीतं भविष्यति नास्ति संदेहलेशः।

१- सर्वप्रथममाचमनं कृत्वा मौनीभूय संकल्प कुर्यात्।

२- भूतशुद्धिं कृत्वा मातृकान्यासः षडङ्गन्यासः कर्तव्यम्।

१- श्रीमद्देवीभागवत ११।१७।४१,४६।

३- विद्वान् पुरुषः शङ्खस्थापनां कृत्वा अर्घ्यादिसामग्र्यः एकत्री करणीयम्।

४- पूजनसामग्री जलेन प्रक्षालनीयम्।

५- गुरोराज्ञा अवश्यप्राप्य तदनन्तरं पूजा प्रारम्भयेत्।

६- प्रथमपीठस्य पूजा सम्पन्नं कृत्वा देव्याध्यानस्य नियमः।

७- भगवतीं प्रति सदाभक्तिं कृत्वा आसनादि उपचारं अर्पयति ततः पञ्चामृतेन स्नानं कारयेत्।

८- यः पुरुषः पौण्ड्रसंज्ञक इक्षुरसेन भगवत्याः महेश्वर्याः स्नानं कारयति, तस्य पुरुषस्य जगति जन्मं न भवति।

९- तथैव यः पुरुषः वेदानां पारायणं कृत्वा इक्षुरसेन भगवत्याः स्नानं कारयति तस्य गृहात् लक्ष्मी एवं सरस्वती कदापि दूरं न भवति।

१०- यो हि मानवः वेदस्य पारायणं कृत्वा दाखरसेन भगवतीजगदम्बायाः अभिषेकं कुर्वन्ति ते स्व कुटुम्बसहितान् रसरेणुप्रमाणं च देवीलोके प्रतिष्ठिता भवेयुः।

११- यः पुरुषः दुग्धपूर्णकलशैः वेदमन्त्रान् पठित्वा देव्याः स्नानं कारयति स कल्पपर्यन्तं क्षीरसागरे निरन्तरं स्थानं

प्राप्नोति।

१२- दधिना यः पुरुषः देव्याः स्नानं कारयति स दधिकुण्ठस्या पतिः भवति।

१३- भक्तिपूर्वकं सहस्त्रकलशैः यं देवीं स्नापयति स स पुण्यात्मो भूत्वा इहलोके सुखं भुक्तवा परलोके सुखी भवेत्।

१४- भगवतीं यः क्षौमं वस्त्रद्वयं ददाति स वायुलोके गच्छति।

१५- यः रत्नजटितभूषणानि देवीमर्पयति स अन्यजन्मनि राजा भवति।

१६- **कश्मीरचन्दनं दत्वा कस्तूरीविंदू भूषितम् ।**
**तथा सीमंतसिंदूरं चरणेऽलक्तकपत्रकम् ।।०।।**

सः पुरुषः इन्द्रासनं प्राप्यः देवपतिः भवेत् ।

१७- साधुपुरुषाः पूजायाः विधौ अनेकप्रकारणि पुष्पाणि आहुः, तान् पुष्पान् यः अर्पयति सः कैलासधामं प्राप्नोति।

१८- भगवत्याः आद्याशक्तिं पवित्रविल्वपत्रार्पणेव कस्मिन्नपि परिस्थितौ पुरुषः दुःखं न प्राप्यते।

१९- त्रिपत्रयुक्तं विल्वपत्रोपरि रक्तचन्दनेन यत्नपूर्वकं सुस्पष्ट सुन्दरेष्वक्षरेषु मायाबीजं मन्त्रं (न्हीं) त्रिवारं लिखित्वा अर्पणेन

स्वर्गसुखं प्राप्नोति। उदारणार्थमिदमस्ति---(ॐ न्हीं भुवनेश्वर्यै नमः) अनेन प्रकारेण मन्त्रेण महादेव्याभगवतीजगदम्बायाः चरणकमले परमभक्तिपूर्वकं स कोमलविल्वपत्रं समर्पयति तथा भक्तिपूर्वकं भगवत्या उपासनां करोति स ब्रह्माण्डस्य स्वामी भवति।

२०- अष्टगन्धेन चार्चितः एककोटिनूतनकुन्दपुष्पैः यः देवीं पूजयति स पुरुषः प्रजापतेः पदस्याधिकारी भवति।

२१- तथैव अष्टगन्धेन चर्चित कोटि कोटि मल्लिकया तथा मलत्या यः पुरुषः भगवतीमर्चयति स चतुर्मुखब्रह्मा भवति।

अग्रेऽपि पूजायाः विधि अतिविस्तृता वर्तते परन्तु प्रबन्धस्य विस्तरभयादत्र न दीयते

मध्याह्नसंध्यायाः तथा तस्य तर्पणस्य विधि एवं सायसंसंध्यायाः वर्णनमपि बहुविस्तृमस्ति।

---

१- उपर्युक्त विधि, देवीभागवतस्य एकादशस्कन्धे सप्तदशोऽध्याये वर्तते।

अस्मिन् एकादशेस्कन्धे गायत्री पुरश्चरणमेवं प्राणाग्निहोत्रस्य विधेः वर्णनमस्ति। प्राजापत्यदि व्रतानामपि वर्णनं अधिकं विस्मृतमस्ति।

कामनासिद्धिः तथा-उपद्रवशान्त्यर्थमपि गायत्र्याः विविधानि प्रयोगाणि सन्ति आसां सर्वासां विधीनां मया सम्यगधीतम्।

श्रीमद्देवीभागवतस्य द्वादशस्कन्धस्य प्रथमद्वितीयोऽध्याये गायत्र्याः वर्णानां शक्तिः, रूपम् , मुद्राणां वर्णनं विद्यते, तेषां समेषां सम्यग् अध्ययनं कृत्वा अत्र संक्षेपेण उपस्थापयामि-

## गायत्र्याः वर्णानां शक्तिः

गायत्र्याः वर्णानां का का शक्तिः इत्यधिकृत्य वर्णनं विधीयते-

वामदेवी, प्रिया, सत्या, विश्वा, भद्रविलासिनी, प्रभावती, जया, शान्ता, कान्ता, दुर्गा, सरस्वती, विद्रुमा, विशालेशा, व्यापिनी, विमला, तमोऽपहरिणी, सूक्ष्मा, विश्वयोनि, जया, वशा, पद्मालया, पराशोभा, भद्रा, त्रिपदा एभ्यः चतुर्विंशति

वर्णेभ्यः चतुर्विंशति शक्तयः उच्यन्ते। अग्रे वर्णनां यथार्थरूपस्य परिचयं दीयते---

चम्पा, अतसीपुष्पं, विद्रुमं, स्पटिकं, कमलपुष्पं, तरुणसूर्यः, शंखः, प्रवालपत्रम् पद्मरागः, इन्द्रनीलमणिः, मौक्तिकम् , कुंकुमम् , अञ्जनामम् , रक्तचन्दनम् , वैदूर्यम् मधुः, हरिद्रम् , कुन्ददुग्धामम् , सूर्यकान्तमणि, शुकपुच्छम् कमलम् , शतपत्रम् , केतकीपुष्पम् , मल्लिकाकुसुमम् , करवीरस्य पुष्पसमानं, क्रमशः एषां वर्णानां रूपाणि परिकीर्तितानि। इमे ये वर्णा युक्ताः एषु वर्णेषु पापानां संहारस्य महान् शक्तिः विद्यते। अग्रे एषां वर्णानां तत्त्वानि कथ्यन्ते, यथा--- पृथ्वी, जलम् , तेजः, वायुः, नभः तथा गन्धः, रसः, रूपम् , शब्दः, स्पर्शश्च, उपस्थः, पायुः, पादः, हस्तः, तथा वागिन्द्रियः, नासिका, जिह्वा, चक्षुः, त्वक्, तथा श्रोत्रम् , एवं प्राणोऽपानः व्यानः, समानः, इमानि तत्त्वानि वर्णानां क्रमशः चतुर्विंशति तत्त्वानि सन्ति। अतः परं वर्णानां मुद्रायाः वर्णनं करिष्ये।

सुमुखं संपुटं चैव विततं विस्तृतं तथा ।
द्विमुखं त्रिमुखं चैव चतुः पञ्चमुखं तथा ।।०।।
षण्मुखाधोमुखं चैव व्यापकांजलिकं तथा ।
शकटं यमपाशं च ग्रथितं संमुखोन्मुखम् ।।०।।
विलम्बं मुष्टिकं चैव मत्स्यं कूर्मवराहकम् ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ।।०।।
त्रिशूलयोनिः सुरभिश्चाक्षमाला च लिंगकम् ।
अम्बुजं च महामुद्रासतुर्यरूपाः प्रकीर्तिताः[1] ।।०।।

एताः महामुद्राः तुर्यरूपा गायत्र्याः चतुर्थचरणस्य सन्ति।

गायत्र्याः महामुद्रा वर्णिताः।

..............................

१- श्रीमद्देवीभागवत स्क०१२ अ०२ श्लोक सं०१४,१५,१६।

# ⁕सप्तमोऽध्यायः⁕

**देवीभागवतोक्त दर्शनविषयाणां वैशिष्ट्य प्रतिपादनम्।**

अस्मिन् प्रबन्धस्य सप्तमोऽध्याये ''देवीभागवतोक्तदर्शन विषयाणां वैशिष्ट्य प्रतिपादनम्'' इति विषयमधिकृत्य दर्शनविषयक वैशिष्ट्यस्य प्रतिपादनं भविष्यति। यथा श्रीमद्भागवते व्यासेन दर्शनविषयस्य विशेषरूपेण प्रतिपादनं कृतमस्ति, तथैव श्रीमदेवीभागवतेऽपि प्रतिपादनमस्ति। अस्मिन देवीभागवते द्वादशस्कन्धाः वर्तन्ते, अस्य देवीभागवतस्याध्ययनेन पाठेन वा मानवाः भुक्तिं मुक्तिं प्राप्नुवन्ति। इदं देवीभागवतं नामकं पुराणं पञ्चमं पुराणं प्रोच्यते।

देवीभागवतस्यानुशीलनेन ज्ञायते यद् देवी एव परमं तत्त्वमस्ति, या निर्गुणा, निव्या सर्वव्यापिका, कल्याणमयी, योगगम्या, जाग्रत्स्वप्नसुषुप्तिभ्यः परायां तुरीयावस्थायां विराजते। तस्याः तिस्रः सात्त्विकी, राजसी, तामसी चेति शक्तयः सन्ति, तथा क्रमशः लक्ष्मी-सरस्वती-कालीरूपेण प्रकटी भवन्ति। तत्र रचनायौ रजोगुणशक्तेः, पालनाय सत्त्वगुणशक्तेः,

संहारय च तमोगुणशक्तेरावश्यकता भवति। अनयैव दृष्ट्या सरस्वत्याः ब्रह्मणासह, लक्ष्म्या विष्णुना साकं, काल्याश्च शिवेन सार्धं, सम्बन्धो भवति। अनयैव च दृष्ट्या पुराणेषु ब्रह्म-विष्णु-महेश्वराः त्रिमूर्तिरूपेण वर्णिताः सन्ति। परमतत्त्वमीमांसादृष्ट्या सर्वाणि पुराणानि एकस्यैव परमतत्त्वस्य प्रतिपादनं कुर्वन्ति। नामरूपविशेष-- निर्विशेषादीनां भेदे सत्यपि तत्त्वतः परमं तत्त्वमेकमेव भवितुमर्हति। समेषां धर्मग्रन्थानां परमं तात्पर्यमेकस्मिन्नेव परमेतत्त्वे विद्यते। तच्च तत्त्वं देवी भागवतानुसारं देवीतत्त्वमेवास्ति, सविशेषात् परं निर्विशेषचर्चा पूर्वक मुक्तमस्ति यत्---

**निर्गुणा दुर्गमा शक्तिः निर्गुणश्च परः पुमान्**
**ज्ञानगम्यै मुनीनां तु भावनीयौ पुनः पुनः ।**
**अनादि निधनौ विद्धिं सदा प्रकृति-पुरुषौ ।।०।।**

अस्येदं तात्पर्यं विद्यते यत् परमशक्तिर्निगुणास्ति तथा परमपुरुषोऽपि अस्ति निर्गुणः। एनयोर्द्वयोर्नाम रूपं च भिन्नं भिन्नं वर्तते। परम तत्त्वतः या शक्तिः स एव परमात्मा, यश्च परमात्मा सैव शक्ति रस्ति, न तयो रस्ति भेदः----

**या शक्तिः परमात्माऽसौ यौऽसौ सा परमामता ।**
**अन्तरं नैतयोः कोऽपि सूक्ष्मं वेद च नारदा ।।०।।**

एवं च या शक्तिः सैव शक्तिमान् परमात्मास्ति तथा यश्च परमात्मा विद्यते, सैव शक्ति र्विद्यते। अनयोर्द्वयोः तत्त्वतः काञ्चनभेदो नास्ति। तथाचोक्तं देव्या स्वयमेव ब्रह्माणं प्रति--

**सदैकत्त्वं न भेदोऽस्ति सर्वदैव ममास्य च ।**
**योऽसौ साऽहमहं योऽसौ भेदोऽस्ति मतिविभ्रमात् ।।**
**आवयोरन्तरं सूक्ष्मं यो वेद मतिमान् हि सः ।**
**विमुक्तः स तु संसारान् मुच्यते नात्र संशयः ।।०।।**

वस्तुतः शक्तिः शक्तिमांश्च द्वावपि एकमेव तत्त्वमस्ति। शक्तिसमाराधन दृष्ट्या देवीभागवतस्य प्रतिपादनं जातमस्ति, अस्मिन् देवीभागवते शक्तेः परिचये दर्शनानि अपि उपलभ्यन्ते। साधकाः तान्त्रिकदृष्ट्या दर्शनिक दृष्ट्या च अस्याध्ययनं कुर्वन्ति। शक्तेः साधनैव शक्तिमतो लक्षणं विद्यते। जगाति साधनैवाराधन रूपेणाभिव्यक्तो भवति। विभिन्न निदर्शनद्वारा सर्वाणि साधरूपाणि देवीभागवते वर्णितानि सन्ति।

अधिकदैविकधरातले भवत्याश्चरित्रस्य विश्लेषणे क्रियमाणे च पञ्चप्रसङ्गाः उपतिष्ठन्ते----

(१) मधुकैटभवधः, (२) महिषासुरवधः, (३) चण्डमुण्डवधः, (४) धूम्रलोचनवधः, (५) शुम्भनिशुम्भवधश्च। ऐतिहासिकदृष्ट्या प्रसंगाश्चैते देवासुरसंग्रामतः सम्बद्धा वर्तन्ते।

मधुकैटभौ आहारविहारयोः प्रतीकौ स्तः। महिषासुरो मोहस्य प्रतीकः, शुम्भनिशुम्भौ चाहङ्कार विषयसुखयोः प्रतीकौ, धूम्रलोचन आलस्यस्य चण्डमुण्डयो रागद्वेषयोः, रक्तबीजस्य वासनाया प्रतीको विद्यते। एषां वधेनैव जीवनशक्तेः साधनासफला भवितुमर्हति, नान्यथा।

## देवीभागवते दर्शनविषयाणां वैशिष्ट्यम्

**देव्यायायातदमिदं जगदात्मशक्तया**
**निःशेषदेवगणशक्तिसमूहमूर्त्या ।**
**तामम्बिकामखिलदेवमहर्षि पूज्यां**
**भक्तया नताः स्मः विदधातु शुभानि सा नः ।।०।।**

दर्शनशब्दस्यार्थः नेत्रमप्यस्ति, पश्यनपि अस्ति, वेदान्त प्रधानं षडदर्शनमप्यस्ति। एतेषां षड्दार्शनानां नाम दर्शन प्रायः अस्माद्धेतो अस्ति यत् इमे संसारस्य स्वरूपं, तत्त्वञ्च षद्स्थानात् , षट् दृष्ट्या, षट्प्रकारेण पश्यन्ति। "प्रस्थानभेदाद्दर्शन भेदः" अनेन बलेन विशेषरूपेण वेदान्तस्य, अध्यात्मशास्त्रबलेन, अन्येषां सर्वेषां शास्त्राणां हृदयं, मर्म

---

१- दुर्गासप्तशती अ० श्लोक

ज्ञानमेव सम्भवो भवति। दर्शनाध्ययनेन मानवानां दृष्टिः नवीना जायते, येन सर्वान् शास्त्रान्, सम्प्रदायान्, मार्गान् पन्थान् धर्मान्, सारान्, सत्यअंशान्, तात्त्विकअंशाञ्च दर्शयन्ति।

"मेधासि देवि विदिताखिलशास्त्रसारा।"[१]

अनया दृष्ट्या दर्शनेन इदं ज्ञातं भवति यत् द्वन्द्वमयसंसारस्य जीवनस्य यथा द्वे कारणे स्तः तथैव उपासनायाः द्वौ प्रकारौ भवतः। (१) एको रसः, (२) एको रूपः। सदा केवली परमात्मान उपासना तथा अनन्तरसवती, अनन्तरूपिणी, सततपरिणामिनी मायायाः उपासना।

**शक्तिशक्तिमदुत्थं हि शाक्तं शैवमिदं जगत्**
**स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ।**
**परमात्मा शिवः प्रोक्तः शिवा मायेति कथ्यते**
**पुरुषः परमेशानः प्रकृतिः परमेश्वरी[१] ।।०।।**

शेते सर्वशरीरेषु इति शिवः। या मा, या नास्ति किन्तु प्रतिभासते सा माया। 'या' अविद्या भोगदा। 'मा' न-- इति न इति सर्वमूर्त्तरूपनिषेधिनी विद्या, मोक्षदा।'

१- दुर्गासप्तशती अ०श्लोक

२- शिवपुराण

या मुक्तिहेतुरविचिन्त्यमहाव्रता त्व-
मभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः।
मोक्षार्थिभिर्मुनिभिरस्तसमस्त दोषै-
र्विद्यासि सा भगवती परमा हि देवि ।।०।।

निद्रायां सुप्तः मनुष्यः जागरितुमिच्छति, जागरणे सति विविधप्रकारस्य कर्मकरणे सति, भोग्यं भुक्ते सति, मनुष्यः सुषुप्सति। भोगः मोक्षः, अभ्युदयः-निश्रेयसः, कामं-निर्वाणं, शक्तिः-शिवः, अयमेव पुरुषार्थस्य द्वन्द अस्ति तथा उपासनायाः द्वन्द अस्ति। आत्मज्ञानरूपापरा विद्याया उपासना शिवोपासना विद्यते। भोगसाधकज्ञानरूपा विद्या अथवा अविद्या कथ्यते, "द्वे विद्येवेदितव्ये परा चैवापरा च" अपरा विद्याया उपासना शक्तयुपासना अस्ति। बुमुक्षु प्रवृत्त्युन्मुखसंसारप्राग्भारव्युत्थान-चित्तस्य अस्यां रुचिः भवति। मुमुक्षु निवृत्त्युन्मुख कैवल्यप्राग्भार-निरोधितचित्तस्य पराविद्या उपासते। "इहैव च निजं राज्यं अविभ्रंश्यन्यजन्मनि" सुरथराजा देव्याः सम्मुखे याचना कृता।

"ममेत्यहमिति प्राज्ञः संगविच्युतिकारकम्' इत्यनेन समाधि वैश्यः उक्तः।

---

१- दुर्गासप्तशती अ० श्लोक

इयं कथा दुर्गासप्रशत्यां प्रसिद्धो वर्तते। द्वन्दः कथमुच्यते तस्याः परिभाषा का इति विचारः। आम् , अपि, न अपि इति द्वन्दः। हसनमपि-- रुदनमपि, जागरितुमपि स्वपितमपि। पार्श्वमपि दूरमपि। इच्छा अपि, नेच्छापि, इत्यादिकं सर्वं पुरुषस्य प्रकृतिरस्ति, पुरुषात् भिन्नः प्रकृतिः न, पुरुषस्य प्रकृतिः। परमात्मनः स्वभावः। ब्रह्मणः माया। शिवस्य शक्तिः। ईश्वरभूत जीवः तथा जीवभूत ईश्वरस्येच्छा। इत्यादिकं सर्वं द्वन्दात्मकमस्ति।

अत्र एकस्य प्रसंगस्य द्वन्द विषयकं क्रियते यद् श्रीमद्देवीभागवते महिषासुर देव्याः संवादे देवी कथयति यत् भो महिषासुर!

नाहं पुरुषमिच्छामि परमं पुरुषं विना।[१]

परमपुरुषपरमात्मनोऽतिरिक्तः अन्यं कश्चित्पुरुषं ममाभीष्टो नास्ति,।

**तस्य चेच्छास्म्यहं दैत्य! सृजामि सकलं जगत् ।**
**स मां पश्यति विश्वात्मा तस्याहं प्रकृतिः शिवा ।।०।।**

१- देवीभागवत स्क०५ अ०१६ श्लोक ३५। | २- देवीभागत स्क०५ अ०१६ श्लो ३६

भो दैत्यं! अहं केवलं विश्वात्मानमिच्छा, सम्पूर्ण जगदस्य सृष्टिकरणं मम प्रधानकर्तव्यमस्ति, स परमपुरुषः सम्पूर्ण विश्वस्य आत्मा अस्ति। ममोपरि परमपुरुषः सम्पूर्ण विश्वस्य आत्मा अस्ति। ममोपरि तेषां दृष्टिः सर्वयैव तिष्ठति यतो हि तस्याहं प्रकृतिस्मि। द्वन्द विषयकमेकमन्यमुदाहरणं प्रस्तौमि-

**सगुणा निर्गुणा सा तु द्विधा प्रोक्ता मनीषिभिः ।**
**सगुणा रागिभिः सेव्या निर्गुण तु विरागिभिः।।०।।**

श्रीमद्देवीभागवते आद्याशक्ति विषये विचारणीये समये अस्य श्लोकस्य प्राग् अयं प्रसंगः विद्यते----

भगवान् विष्णुः यदा योगनिद्रावशीभूतः तदा ब्रह्मा देव्याः स्तुतिं करणे इदमपि कथितं यत् सर्वेषु मानवेषु देवेषु या शक्तिः विराजते सा एव आद्याशक्तिः। तस्याः एव प्रभावेण शिवमपि शिवतां प्राप्नोति, यस्योपरि तस्याः शक्तेः कृपा न भवति स कश्चिदपि भवेत् शक्तिहीनो भवति। अतः सैव आद्याशक्ति अखिल ब्रह्माण्डमुत्पन्नं करोति। पालनमपि करोति। इच्छा जागृते सति संहारमपि करोति। ब्रह्मा, विष्णुः, शिवः,

१- देवीभागवत स्क०१ अ०८ श्लोक ४०।

इन्द्रः, अग्निः तथा पवनः एते सर्वे स्वातन्त्र्यरूपेण स्व स्व कार्यसम्पादनेऽसमर्थाः सन्ति यदा आद्याशक्तिः सहयोगं ददाति तदा ते स्व कार्ये सफलाः भवन्ति। अतः एतेन कार्यकारणेनेदं सिद्धं भवति यत् शक्ति एव सर्वोपरि विद्यते। विद्वान्सः तां शक्तिं विषये उभयप्रकारस्य कल्पनां कुर्वन्ति----

सगुणा निर्गुणा सा शक्तिः अर्थात् द्वन्द्वात्मकः। तां शक्तिमवलम्बय अन्यमुदाहरणं द्वन्द्व विषये प्रस्तौमि----

श्रीमद्देवीभागवतस्य सप्तमस्कन्धस्य द्वात्रिंशदध्याये भगवती उच्यते यत् पर्वतराज हिमालयः श्रृणु मद्वचनम्। प्रथमं तु केवलमहमेवास्मि अन्या काचित् वस्तोः सत्तानासीत्। तस्मिन् समये मम रूपं सत् चित् एवं आनन्दमय परब्रह्म आसीत्। सः रूपः अप्रतर्क्यम् , अनिर्देश्यम् , अनौपम्यम् अनामयञ्चासीत्। तस्मिन्रूपात् काचिदेका शक्तिः स्वयं प्रकटिता जाता। तस्याः नाम माया इति जाता। सा माया न सती न असती आसीत्। सती असतीभेदेन शून्या सा काचिद् एका विलक्षणा एव वस्तु आसीत्। अग्नौ यः प्रकाशः चन्द्रमसि या चन्द्रिका अस्ति, सः प्रकाशः सा चन्द्रिका ममेव शक्तया अंशः। सा शक्तिः निश्चितरूपेण मम सहचरी ज्ञातव्यम्। जीवानां जीवनं मरणञ्च तस्या एव शक्तेः कर्म।

प्रलयस्य समये किञ्चित् भेदं नासीत्। सर्वं तस्यां शक्तिमेव समाविष्टाः। तस्याः शक्तेः सहयोगेन अहं वीजरूपे परिणता। सा शक्ति एव तस्मिन्समये ममाधार एवं आवरणमासीत्। अस्मात् कारणात् तस्याः केचन दोषा मयि आगताः।

**चैतन्यस्य समायोगान्निमित्तत्वं च कथ्यते।**
**प्रपञ्च परिणामाच्च समवायित्वमुच्यते[१] ।।०।।**

मम वीजात्मकरूप चैतन्यं ब्रह्मणः सहयोगात् निमित्तं तथा प्रपञ्चस्य परिणामात् समवायिकारणमुच्यते।

**केचित्तां तप इत्याहुस्तमः केचिज्जडं परे**
**ज्ञानं माया प्रधानञ्च प्रकृतिं शक्तिमप्यजाम् ।।**
**विमर्श इति तां प्राहुः शैवशास्त्र विशारदाः ।**
**अविद्यामितरे प्राहुर्वेदतत्त्वार्थ चिन्तकाः[२] ।।०।।**

केचिन तां शक्तिं तपमुच्यन्ते, अन्ये तमः जडञ्च उच्यन्ते। शैवशास्त्रविशारदाः पुरुषाः तस्याः शक्तिविषये परस्परं

---

१- श्रीमद्देवीभागवत ७।३२,८।

२- श्रीमद्देवीभागवत ७।३२।९,१०।

विमर्शं प्राहुः यत् इय शक्तिः ''ज्ञानं'' ''माया'' ''प्रधानं'' 'प्रकृतिः' 'शक्तिः' ''अजां'' कथितुं शक्नोति। वेदान्तस्य सिद्धान्तचिन्तनकर्तार अन्ये महापुरुषा अविद्यां कथयन्ति। अनेन प्रकारेण द्वन्द्वात्मकरूपेण परा, अपरा, विद्या अविद्या इत्यादिः।

इच्छाशक्तिरूमा कुमारी (शिवसूत्र विमर्शिनी)। इच्छा एव शक्तिः, यदा अन्य बलवत्तरेच्छायाः व्याहतो न भवेत् तदा शक्तिः। यदि व्याहतो भवेत् तदा अशक्ति अस्ति। परन्तु व्याघातात् क्रोधस्य रूपं धारणं कृत्वा सा अशक्ति एव समयं प्राप्य नूतनायाः शक्तेः रचना जायते।

**पीडयन्ते दुर्बला यत्र तत्र रुद्रः प्रजायते ।**
**प्रह्लादः सहतां क्लेशान् नृसिंहः केन वार्यते ।।०।।**

''सुखानुशयी रागः, दुःखानुशयी द्वेषः'' ग्रहणेच्छा, आकर्षणेच्छा उपासनेच्छायाः नाम राग अथवा काम अस्ति। त्यागेच्छा, अपकर्षणेच्छा, अपासनेच्छायाः नाम द्वेष अथवा क्रोधः। आभ्यां द्वाभ्यां प्रतिद्वन्द्विभ्यां सुन्दोपसुन्दवत् , परस्पर संहारसंहारेण, परस्पर निषेध-प्रतिषेधेन, नं-इति, न-इति, कृत्वा जीवनतुलाया उभौ सुखदुःख समानौ भवतः। सार्विक

पारिमार्थिकदृष्ट्या सर्वकाल अथवा कालाभावे सदा स्थिते सति एव ब्रह्मपरमात्मनः निष्क्रियता, अपरिणामिता, एकरसता-अखण्डता-निरञ्जनता-निर्विशेषता, शिवस्य शिवता, शान्तता, शयिता, सुसुप्तता, तुरीयतायाः सिद्धिः भवति। इयमेव रागद्वेषिणीरूपा महाशक्तिः-इच्छाशक्ति-नामक अभूर्त्त आध्यात्मिकतत्त्वस्य पौराणिकी तान्त्रिकी साम्प्रदायिकी मूर्त्तरूपा गौरी-काली, भवानी-भैरवी, अन्नपूर्णा-दुर्गा, उमा-चण्डी, आदयः सन्ति। अस्याः शक्ते एव पुरुषाकारः शिवः-रुद्रः, भवः-हरः, शङ्कर=उग्र, ईशानः-भीमाः, सन्ति। कथनस्य तात्पर्यमिदमस्ति यत् यथा यस्याः भावना तथा तेनैव रूपेण शक्तेः दर्शनं भवति। ''मननात् त्रायते इति मन्त्रः'' मन्त्रमूर्तिर्देवता'' अर्थात् यस्य देवतायाः मूर्तिः प्रत्यक्षे स्थाप्य संकल्पं मानवाः कुर्वन्ति यदहं अस्याः मूर्ते एव अर्चां करोमि। तदनुसारेणैव ते अभीष्ट सुखं प्राप्नुवन्ति। परन्तु यदि विना इच्छया अविश्वासेन अथवा अन्य किञ्चित् कारणेन अनिच्छया अर्चां कुर्वन्ति ते तदनुषक्त दुःखमपि प्राप्नुवन्ति। सर्वे जीवाः सर्वशरीराः, सर्वे उपासकाः, सर्व उपास्यः, सर्वे भक्ताः, सर्वे इष्टाः, एक एव परमदेवतायाः यः सर्वव्यापकः, प्रेरकपरमात्मनः संकल्पशक्तिः भावनाशक्तिः इच्छाशक्तया कल्पितः भाविताः प्राणिताः भवन्ति। सर्वाणि तस्य रूपाणि सन्ति।

"रूपं रूपं प्रतिरूपो बभूव।"

अस्य परमात्मनः 'मा-या' रूपिणी इच्छाशक्तिरेवतस्य मूलपुरुषस्य मूलप्रकृतिरस्ति। परन्त्वस्य त्रीणि त्रीण्यङ्गानि सन्ति। हृदयस्थानी तु इच्छाशक्तिरस्ति, शिरः स्थानी ज्ञानशक्तिरस्ति, हस्तपादस्थानी क्रियाशक्तिरस्ति।

**मूलप्रकृतिरूपिण्याः संविदो जगदुद्भवे ।**
**प्रादुर्भूतं शक्तियुग्मं प्राणबुद्ध्यधि दैवतम् ।।०।।**
**(दुर्गा तु बुद्ध्यधिष्ठात्री राधा प्राणेश्वरी मता)**
**राध्नोति सकलान् कामांस्तस्माद्राधेति कीर्त्तिता ।।०।।**
**सर्वबुद्ध्याधिदेवीयमन्तर्यामि स्वरूपिणी ।**
**दुर्गासङ्कर हन्त्रीति दुर्गेति प्रथिता भुवि[१] ।।०।।**

इच्छा पूरणार्थमुपायः बुद्धिः, ज्ञानशक्तिः, ज्ञानेन्द्रव्यापिनी कथ्यते, तथा क्रियाशक्तिः, प्राणशक्ति, कर्मेन्द्रियव्यापिनी तमुपायं निष्पन्नं करोति। एकैव संवित् शक्तिः, चेतनाशक्तिः, चित्‌शक्ते तिस्त्रः कलाः, त्रीणि आननानि, त्रयरूपव्यवहारे, व्यावहारिक दृष्ट्या पश्यमानाः भवन्ति। पारमार्थिकदृष्ट्या

---

१- श्रीमद्देवीभागवत

निष्क्रियः, निश्चलः, निःस्पन्दः, भूत्वा त्रय एकाकारे संवित् आकारे अव्यक्तब्रह्मपरमात्मापरमपुरुषे सदा प्रलीनः निर्वाण अपि अस्ति।

**या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।**
**चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थितो जगत्[1] ।।०।।**

तस्य परमप्रकृतेः त्रयो आदिमः विकृतयः इमाः सन्ति। येषां न्यायशास्त्रोक्तं आध्यात्मिकं नाम ज्ञानशक्तिः, इच्छाशक्तिः, क्रियाशक्तिरस्ति। आसामेव पौराणिको नाम महासरस्वती, महाकाली, महालक्ष्मी अस्ति। तान्त्रिक नाम ऐं क्लीं न्हीं (श्रीं) अस्ति। आसामेव पुरुषाकाराणां पौराणिको नाम विष्णुः महेशः ब्रह्मा अस्ति। आधिदैविकः सांख्ययोगोक्त नाम सत्त्वम् तमस् , रजस् , अस्ति। पारमार्थिकः वेदान्तोक्तनाम चित् आनन्दः सत् इत्यस्ति। यथा इच्छायाः द्वौ प्रतिद्वन्द्वौ रूपौ काम-क्रोधौस्तः। तथैव ज्ञानस्य द्वौ प्रतिद्वन्द्वौ तथ्यं-मिथ्या च। तथा क्रियायाः----

१- दुर्गासप्तशती

''परोपकारः पुण्याय पापाय परपीडनम्''।

''ज्ञानेच्छाक्रियाणां तिसृणां व्यष्टीनां महासरस्वतीमहाकाली-महालक्ष्मीरिति प्रवृत्तिनिवृत्तिवैलक्षण्येन नामरूपान्तराणि। सच्चिदानन्दात्मकपरब्रह्मधर्मत्वादेव शक्तेरपि त्रिरूपत्वम्।

**महासरस्वतीचित्ते महालक्ष्मिसदात्मिके ।**
**महाकाल्यानन्दरूपे त्वत्तत्त्वज्ञानसिद्धये[1] ।**
**अनुसंदध्महे चण्डि वयं त्वां हृदयाम्बुज[2] ।।०।।**

महालक्ष्मीर्ब्रह्मत्वं महाकाली रुद्रत्वं महासरस्वती विष्णुत्वं प्रपेदे।

**''रजोगुणाधिको ब्रह्मा विष्णुः सत्त्वाधिको भवेत् ।**
**तमोगुणाधिको रुद्रः सर्वकारणरूपधृक् ।।०।।**
**स्थूलदेहो भवेद् ब्रह्मा लिङ्गदेहो हरिस्मृतः ।**
**रुद्रस्तु कारणो देहस्तुरीयस्त्वहमेव हि[3] ।।०।।''**

''यास्य प्रथमा रेखा...सा क्रिया शक्तिः। यास्य द्वितीयारेखा सा...इच्छाशक्तिः। यास्य तृतीया सा...ज्ञानशक्ति।

---

१- गुप्तवती टीका।

२- सप्तशती गुप्तवती टीका।

३- देवीभागवत १२।८।७२-७३।

शक्तिः स्वाभाविकी तस्य विद्या विश्वविलक्षणा ।
एकानेकस्वरूपेण भाति भानोरवि प्रभा ।।०।।
अनन्ताः शक्तयस्तस्य इच्छाज्ञान क्रियादयः ।
(इच्छाशक्तिर्महेशस्य नित्या कार्यनियामिका ।।०।।)
ज्ञानशक्तिस्तु तत्कार्यं कारणं करणं तथा ।
प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्याति ।।०।।
यथेप्सितं क्रियाशक्तिर्यथाध्यवसितं जगत् ।
कल्ययत्यखिलं कार्यं क्षणात् संकल्परूपिणी[1] ।।०।।

अनन्ताः शक्तयस्तस्य। देवीभागवते, सप्तशत्यां, अन्य पुराणेषु तन्त्रेषु च, ललितासहस्त्रनामप्रभृतिस्तोत्रेषु च अस्याः सूचना कृता वर्तते। मूर्त्तरूपाणामपि अमूर्त्त आध्यात्मिकभावानां रूपेष्वपि वर्तते----

सात्त्विकस्य ज्ञानशक्ति राजसस्य क्रियात्मिका ।
द्रव्यशक्तिस्तामसस्य तिस्त्रश्च कथितास्तव[2] ।।०।।

परमात्मन इच्छाशक्तीनांमेव रूपान्तरमनन्तद्रव्यशक्तयः सन्ति। अतः एनां अर्थशक्तिमप्युच्यते।

---

१- शिवपु०वायुसं० उत्तर ख०। अ०७ श्लोक ८।

२- देवीभागवत ३।७।२६।

"ऋषिरेव हि जानाति द्रव्यसयोगजान् गुणान्"। इयमिच्छाशक्तिः पदार्थानां, द्रव्याणां, शरीराणां, योनयः, भूतग्रामाणां रूपस्य धारणं करोति तथा मारणमपि करोति।

छान्दोग्योपनिषद् वर्तते----

"मन्वानि श्रृण्वानि पश्यानि जिघ्राणि अभि व्याहराणि इति आत्मा....मनः श्रोत्रं चक्षुः, घ्राणं वाक्....अभवन्।

तन्त्रशास्त्रस्य सङ्केते "इ" अनेन शक्तया बोधो भवति, यदि 'शिव' अस्य शब्दस्य इ अक्षरः पृथग् भवति तदा 'शव' इति, अतः भगवतपादाः शङ्कराचार्याः सौन्दर्यलहर्यां स्तुतिं करोति भगवत्याः----

**शिवः शक्तयायुक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।**
**अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि**
**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति[1] ।।०।।**

---

१- सौन्दर्यलहरी श्लोक १।

शिवः शक्तया युक्तोऽयं संसारः। शिवः परमात्मा तु एक एवास्ति। परञ्च "एकाकी नारमत, स आतमानं द्वेधाऽपातयत् , पतिश्च पत्नी चाभवत्"---- द्वेधा अपि, बहुधा अपि, असंख्यधा अपि, "एकोऽहंबहुस्याम्"। एकपुरुष नानाप्रकृतिभूते सत्यपि एक एव पुरुषः सर्वव्यापी भवितव्यम्। परन्त्वन्योन्याध्यासेन एकस्यानेक पुरुषाः, अनेकस्यैकप्रकृतिरपि, दर्शयति। आनन्दलहर्यां भगवत् शङ्करयादाः उच्यन्ते यत्--

**गिरामाहुर्देवी द्रुहिणगृहिणीमागमविदो**
**हरेः पत्नी पद्मां हरसहचरीमद्रितनयाम् ।**
**तुरीया कापि त्वं दुरधिगमनिस्सीमममहिमे**
**महामाये विश्वं भ्रमयसि परब्रह्म महिषी[1] ।।०।।**

**शङ्करः पुरुषाः सर्वे स्त्रियः सर्वा महेश्वरी ।**
**विषयी भगवानीशो विषयः परमेश्वरी ।।०।।**
**मन्ता स एव विश्वात्मा मन्तव्यं तु महेश्वरी ।**
**आकाशः शङ्करो देवः पृथ्वी शङ्करप्रिया ।।०।।**
**समुद्रो भगवानीशो वेला शैलेन्द्रकन्यका ।**
**वृक्षो वृषध्वजो देवो लता विश्वेश्वर प्रिया ।।०।।**
**शब्दजालमशेषं तु धत्ते सर्वस्य वल्लभा ।**
**अर्थस्यरूपमखिलं धत्ते मुग्धेन्दुशेखरः[2] ।।०।।**

---

१- सौन्दर्य लहरी श्लोक।

२- शिवपुराण बायवी सं० उ०ख०अ०५।

यस्य यस्य पदार्थस्य या या शक्तिरूदाहृता ।
सा सा विश्वेश्वरी देवी स स देवो महेश्वरः ।।०।।
पुल्लिंगमखिलं धत्ते भगवान् पुरशासनः ।
स्त्री लिंगं चाखिलं धत्ते देवी देव मनोरमा ।।०।।
येयमुक्ता विभूतिर्वै प्राकृति साऽपरामता ।
अप्राकृतीं परामन्यां गुह्यां गुह्य विदो विदुः ।।०।।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
अप्राकृती परा सैषा विभूतिः परमेष्ठिनः ।।०।।
युवां तु विश्वस्य विभू जगतः कारणं परम् ।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया[१] ।।०।।
तस्या अधीश्वरः साक्षात् त्वमेव पुरुषः परः ।
त्वं सर्वयज्ञ इज्ज्ञेयं क्रियेयं फलभुग् भवान् ।।०।।
गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् ।
त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशया
नामरूपे भगवती प्रत्ययस्त्वमाश्रयः ।।०।।

उपर्युक्त श्लोकाः श्रीमद्भागवतस्य षष्ठस्कन्धे शुकदेवमुनिः परीक्षितं प्रति कथयति यत् भो परीक्षित! भगवन्तं विष्णुं प्रणम्य तदनन्तर उपर्युक्त श्लोकानां पाठं कर्तव्यम्। श्लोकानां भावार्थः---

भो लक्ष्मीनारायण! भवन्तौ सर्वव्यापकौ स्तः, सम्पूर्ण चराचरमगदस्य कारणमस्ति। भवत अन्यः कोऽपि कारणं

१- श्रीमद्भागवत ६।१९।११-१३।

नास्ति, मातालक्ष्मी भवतः मायाशक्तिः, इयमेव स्वयमेव अव्यक्त प्रकृतिरपि अस्ति, अस्याः परं पार मति कठिनं वर्तते। भवानृ एव अस्याः महामाया एव अधीश्वर अस्ति, तथा भवान् एव परमपुरुषः, त्वं सर्वयज्ञः, इयमेव यज्ञ क्रिया, भवान् फलस्य भोक्ता, माया तस्यफलोत्पन्नस्य क्रिया, माता लक्ष्मी त्रयाणां गुणानामभिव्यक्तिः, भवान् समस्त प्राणिनामात्मा, तथा लक्ष्मी शरीरः, तथा इन्द्रियः, तथा अन्तः करणमस्ति। माता लक्ष्मी नाम रूप उभयोः प्रकाशिका तथा आधारः भवतः कीर्तिः पवित्र अस्ति, उभौ द्वौ त्रैलोक्यस्य वरदाता परमेश्वरः अस्ति।

अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः ।
बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया स्वयम् ।।०।।
स्त्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः ।
सन्तोषो भगवाँल्लक्ष्मीस्तुष्टि मैत्रेय शाश्वती ।।०।।
इच्छा श्रीर्भगवान् कामो यज्ञोऽसौ दक्षिणात्वियम् ।
आज्याहुतिरसौ देवी पुरोडाशो जनार्दनः ।।०।।
नदस्वरूपी भगवाञ्छ्री नदीरूप संस्थिता ।
ध्वजश्च पुण्डरीकाक्षः पताका कमलालया ।।०।।
तृष्णालक्ष्मीर्जगन्नाथो लोभो नारायणः परः ।
रती रागश्च मैत्रेय लक्ष्मीर्गोविन्द एव च ।।०।।

---

१- विष्णुपुराण अंश १ अ०८ श्लोक सं० १८-२०।

किञ्चातिबहुनोक्तेन संक्षेपेणेदमुच्यते
देवतिर्यङ् मनुष्यादौ पुन्नामा भगवान् हरिः ।
स्त्री नाम्नी श्रीश्च विज्ञेया नानयोर्विद्यते परम्[1] ।।०।।

एषु श्लोकेषु भगवतः विष्णो एवं महालक्ष्म्यायाः सर्वव्यापकतायाः विशेष वर्णनं विद्यते, भावार्थः मया न लिख्यते, श्लोकेनैव सर्वं भावार्थं स्पष्टो भवति।

वायुपुराणेऽपि इदमर्थं द्वितीयरूपके कथितमस्ति विष्णुरभाषत ब्रह्माणं प्रति---

हेतुरस्यात्र जगतः पुराणः पुरुषोऽव्ययः ।
प्रधानमव्ययं ज्योतिरव्यक्तं प्रकृतिस्तमः ।।०।।
अस्य चैतानि नामानि नित्यं प्रसवधर्मिणः ।
यः कः स इति दुःखार्त्तैर्मृग्यते योगिभिः शिवः ।।०।।

एष बीजी भवान् बीजमहं भूतमन्यन्न विद्यते शिव उवाच विष्णुं प्रति----

प्रकाशं चाप्रकाशञ्च जङ्गमं स्थावरञ्च यत् ।
विश्वरूपमिदं सर्वं रुद्रनारायणात्मकम् ।।०।।

---

१- विष्णुपुराण अंश१ अ०८ श्लोक सं० ३२-३५।

अहमग्निर्भवान् सोमो भवान् रात्रिरहं दिनम् ।
भवान् ऋतमहं सत्यं भवान् क्रतुरहं फलम् ।।०।।
भवान् ज्ञानमहं ज्ञेयमहं जप्यं भवाञ् जपः ।
आवाभ्यां सहिता चैव गतिर्नान्या युगक्षये ।।०।।
आत्मानं प्रकृतिं विद्धि मां विद्धि पुरुषं शिवम् ।
भवानर्द्धशरीरं मे त्वहं तव तथैव च ।।०।।

विष्णोः मोहिनीअवतारकथायां इमं भावं चरितार्थं कृतमस्ति।

शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः। विष्णोः ब्रह्मण अभेदमस्ति, त्रिमूर्तिः-ब्रह्मा विष्णु महेशस्य। सरस्वती-लक्ष्मी-गौर्या अभेदः। सत्व-रजस्-तमसस्याभेदः। ज्ञान-इच्छा-क्रियायाः सर्वदैव अभेद अस्ति। एषां सर्वेषां समाहारः शक्ति-शक्तिमाने भवति। एवम्---

शक्ति शक्तिमदुत्थं हि शाक्तं शैवमिदं जगत् ।
नमस्तस्यै नमस्तस्यै नमस्ताभ्यां नमोनमः ।।०।।

अनन्तकोटिब्रह्माण्डात्मकप्रपञ्चस्याधिष्ठानभूता सच्चिदानन्दरूपा भगवती एव सम्पूर्णविश्वास्य सत्तां स्फूर्तिः तथा सरसतां प्रदानं करोति। विश्वप्रपञ्चः भगवत्या एव उत्पन्नो भवति, तस्यामेव लीनोऽपि भवति। यथा दर्पणे आकाशमण्डलः, भूधरः, सागरादिप्रपञ्चः, प्रतीतो भवति। परन्तु दर्पणं यथा

स्पर्शकरणेन वास्तविकरूपेण किञ्चिदपि नहि उपलब्धो भवति। तथैव सच्चिदानन्दरूपमहाचितिभगवत्यां सम्पूर्णं विश्वं भासितो भवति। यथा दर्पणं विना प्रतिविम्बस्य भानं न भवति, दर्पणस्योपालम्भे एव प्रतिविम्बस्य उपालम्बो भवति। तथैव अखण्डनित्यनिर्विकारमहाचितौ एव-तस्य अस्तित्वे एव प्रमाता, प्रमाण प्रमेयादि विश्वमुपलब्धो भवति। सामान्यरूपेण तु इदं वचनं सर्वमान्यमस्ति, यत् प्रमाणाधीन एव कस्यचिदपि प्रमेयस्य स्थिति भवति। अतः सम्पूर्ण प्रमेये प्रमाणः कवलितमेवोपलब्धं भवतिं प्रमाता-प्रमाण-प्रमेय एते त्रदः अन्वोन्यस्यापेक्षामिच्छन्ति। प्रमाणस्य विषयः जाते सति कोऽपि वस्तुः प्रमेयं भवितुं शक्नोति। प्रमेयविषयकः प्रमाणस्याश्रयं अन्तःकरणावच्छिन्न चैतन्य एव प्रमाता उच्यते। तथापि येषां सर्वेषां उत्पत्तिः स्थिति तथा गतेः भासकः नित्यबोध आत्मैवास्ति। सैव साक्षी "ब्रह्म" अपि कथ्यते। मायाशक्तेराश्रयणं कृत्वा सा एव त्रिपुरसुन्दरी भगवती विष्णुः, शिवः, रामः, कृष्णः, गणपति सूर्यादिरूपेषु व्यक्ताः भवन्ति। स्थूलसूक्ष्म कारणरूपात्रिपुरान्तस्थले विराजमाना सर्वसाक्षिणी चिति एव त्रिपुसुन्दरी उच्यते। यथा मायाविशिष्ट तत्त्वेभ्यः रामकृष्णादय अवताराः भवन्ति, तथैव महालक्ष्मी, महासरस्वती, महागौरी आदि अवताराः भवन्ति। यद्यपि श्रीभगवती नित्या अस्ति तैरेवेदं प्रपञ्चं व्याप्तो वर्तते तथापि तस्या उत्पत्तिः अनेकैः

प्रकारैः भवति। देवानां कार्याय यदा प्रकटितो भवति तदपि नित्यं जाते सत्यपि देवी उत्पन्ना अभवन्।

सप्तशत्यामस्ति यत्----

**नित्यैव सा जगन्मूर्तिस्तस्या सर्वमिदं ततम्**
**तथापि तत्समुत्पत्ति र्बहुधा श्रूयतां मम ।**
**देवानां कार्य सिद्ध्यर्थमाविर्भवति सा यदा**
**उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ।।०।।**

यद्यपि शास्त्रेषु मायारूपाभगवत्या एवोपासना कथिता आसीत्। परन्तु माया वेदान्तसिद्धान्तानुसारेण मिथ्या अस्ति। अतः मुक्तौ तस्यानुगतिः न भवितुं शक्नोति। अतः भगवत्या उपासना अश्रद्धेयोऽस्ति। ''नृसिंहतापिन्यां'' स्पष्टोल्लेखः वर्तते यत् नारसिंही माया एव सम्पूर्णप्रपञ्चस्य सृष्टिं करोति। सा एव सर्वेषां रक्षां करोति संहारमपि करोति। तां मायाशक्तिमेव ज्ञातव्यम् ध्यातव्यञ्च। अमृतत्त्व तथा महतीश्रीं प्राप्नोति। यथा-

**माया वा एषा नारसिंही सर्वमिदं सृजाति,**
**सर्वमिदं रक्षति, सर्वमिदं संहरति, तस्मान्-**
**मायामेवतां शक्तिं विद्यात् , य एतां मायां**
**शक्तिं वेद, स मृत्युं जयति, स पाप्मानं तरति,**
**सोऽमृतत्त्वं गच्छति, महतीं श्रियमश्नुते ।।०।।**

---

१- दुर्गासप्तशती १।६४-६६।

देवा अपि उच्यन्ते---

**त्वं वैष्णवी शक्तिरनन्तवीर्या**
**विश्वस्य बीजं परमासि माया[१] ।**

एतैः सर्वैः वचनैः स्पष्टो भवति यत् भगवती मायारूप एव सन्ति। देवीभागवताद्यनुरूपं माया स्वयं जड अस्ति। परन्त्विदं नोचितं प्रतिभाति, निम्नलिखितप्रमाणेन सिद्धो वर्तते यत् देवी साक्षाद्ब्रह्मरूपिणी सन्ति।

**सर्वै वै देवा देवीमुपतस्थुः कासित्वं महादेवीति!**
**साऽब्रवीत्-अहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्[२]।**

सर्वेषामुपनिषदेष्वपि ब्रह्मरूपिणी भगवत्या एव उपासना प्रतिपादितमस्ति। पुराणेषु संहितासु च साक्ष्यमस्ति- यथा---

**अतः संसारनाशाय साक्षिणीमात्मरूपिणीम् ।**
**आराधयेत् परां शक्तिं प्रपञ्चोल्लास वर्जिताम्[३] ।।०।।**

---

१- दुर्गासप्तशती ११।५।

२- श्रीदेव्यथर्वशीर्ष।

३- सूतसंहिता।

संसार निवृत्यर्थं प्रपञ्चस्फुरणशून्य, सर्वसाक्षिणीः आत्मरूपिणी, पराशक्तिमेव आराधना कर्तव्यम्।

परा तु सच्चिदानन्दरूपिणी जगदम्बिका ।
सर्वाधिष्ठानरूपा स्याज्जगद् भ्रान्तिश्चिदात्मनि[१] ।।०।।

देवीभागवतेऽपि उच्यते यत्---

निर्गुणा सगुणाचेति द्विधा प्रोक्ता मनीषिभिः ।
सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ।।०।।

निर्गुणसगुणा रूपेण द्विधारूपेण भगवती विद्यते, रागीजनार्थं सगुणासेव्या, विरागिभि निर्गुणा इति।।

## शाक्ताद्वैत अथवा तान्त्रिकदृष्ट्या भगवती

तन्त्रानुसारेण 'प्रकाश' एव शिवः, तथा ''विमर्शः'' एव शक्तिः। संहारे शिवस्य प्राधान्यमस्ति, सृष्टौ शक्तेः प्राधान्यमस्ति। प्रमायामिदमंशं ग्राह्यमस्ति। तथा अहमंशं ग्राहकं मन्यते। अन्तः वर्तमानपदार्थानामेव बाह्यरूपेऽवभासो भवति।

१- स्कन्दपुराण

वर्तमानावभासानां भावानामभवमासनम् ।
अनतः स्थितवतामेव घटते बहिरात्मना ।।०।।

प्रकृतौ सूक्ष्मरूपेण सर्वाणि वस्तूनि स्थितानि सन्ति। परमशिवः तथा शक्तिः उभाभ्यामेव शिलष्टाः सन्ति। निःस्पन्दं परमशिवतत्त्वं तथा निषेधात्मकतत्त्वमेव शक्तितत्त्वमस्ति----

आसीज्ज्ञानमथा ह्यर्थ एकमेवाविकल्पतः ज्ञानं तथा अर्थः उभयमेव अविल्पितो भूत्वा एकैव तिष्ठन्ति। तदैव साम्यावस्था जायते। भगवत्याः विषये तन्त्रदृष्ट्या इदं सूत्ररूपपरिचयमस्ति। शाक्तद्वैते भगवत्याः स्वरूपस्य वितरणात्मक परिचयं संक्षेपेण प्रस्तौमि----

शाक्तद्वैतस्य दृष्टिरियं यत् अननतविश्वस्य अधिष्ठानभूत शुद्धः बोधस्वरूप प्रकाश एव शिवतत्त्वं ज्ञातव्यमिति। तस्मिन्प्रकाशे अस्तित्वमनिवार्यमस्ति। विना प्रकाशंन विमर्शं न तथा विना विमर्शं प्रकाशमपि न तिष्ठति। यद्यपि वेदान्तीनां दृष्टौ विना विमर्शस्यापि अनन्तनिर्विकल्पकप्रकाशं तिष्ठति।

..........................

# ॥ उपसंहार ॥

देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ।
विघ्नं हरतु हेरम्बचरणाम्बुजरेणवः ।।०।।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।।०।।
यामाराध्य विरिञ्चिरस्य जगतः स्रष्टा हरिः पालकः ।
संहर्ता गिरिशः स्वयं समभवज्ज्ञेया च या योगिभिः ।।०।।
यामाद्यां प्रकृतिं वदन्ति मुनयस्तत्त्वार्थविज्ञाः परां ।
तां देवीं प्रणमामि विश्वजननीं स्वर्गापवर्गप्रदाम् ।।०।।

अस्मिन् विशाले संस्कृतसाहित्ये सर्वं परिपूर्णं परिलक्ष्यते। संस्कृतसाहित्यस्य वेदमूलकत्वं निर्विवादम्। तस्मिन् संस्कृत साहित्ये श्रीमद्देवीभागवतं नामकं एकमुत्कृष्टतमं पुराणमस्ति। श्री देव्याः मुखकमलात् ''सर्वं खल्विदमेवाहं नान्यदस्ति-सनातनम्'' इमं यं अर्धं श्लोकं निष्क्रान्तः तस्यैव ''श्रीमद्देवी-भागवतं'' नाम जातम्। इदं पुराणं वेदस्य सिद्धान्तानां बोधकोऽस्ति। वटस्यपत्रोपरिशयनं कर्तुं विष्णुं प्रति देवी अस्योपदेशं कृतमासीत्। इममेव सर्वप्रथमं ब्रह्मणः शतकोटि श्लोकेषु विस्तारपूर्वकं वर्णनं कृतमासीत्। तदनन्तरं भगवतो वेदव्यासः शुकदेवमध्ययनार्थं अस्य देवीभागवतस्य सारभागमेत्रीकृत्य अष्टादशसहस्रेषु श्लोकेषु अस्य पुराणस्य

रचना कृता। इमं पुराणं द्वादशस्कन्धेषु सज्जीकृतः। तस्मिन्समये एवास्य नाम ''श्रीमद्देवीभागवत'' अभूत्। इदं पुराणमस्मिन्समयेऽपि देवलोके तथैव विस्तृतरूपेण विद्यते। अनेन समानं पवित्रं पापनाशकं, पुण्यप्रदञ्च अन्यः कोऽपि पुराणः न विद्यते। अस्य पुराणस्य एकैकपदस्याध्ययनेन मनुष्यः अश्वमेधयज्ञस्य फलं प्राप्नोति। इदं श्रीमद्देवीभागवतं पुराणं समस्त वेदानां गुह्यविषयोऽस्ति। अस्य प्रत्येकपदस्य दुर्गमता रहस्यमयी वर्तते। श्रीमद्देवीभागवतं द्वादशस्कन्धेषु विभक्तो वर्तते। प्रत्येकस्कन्धे भिन्नाः भिन्नाः विषयाः भिन्नानि भिन्नानि स्तोत्राणि सन्ति, तानधिकृत्य एव अयं शोधप्रबन्धः पूर्णतामगात्।

असिमन् शोधप्रबन्धस्य प्रथमोऽध्याये ''देवीभागवतस्य कर्ता तस्य संक्षिप्तमैतिह्यम् , तस्य कृतित्वं व्यक्तित्वञ्च सम्यग्रूपेणोद्ङ्कितमस्ति। यत्र कुत्रतः भगवतो व्यासस्य परिचयः उपलभ्यते तत्सर्वं विवेचितं मया।

प्रबन्धस्य द्वितीयोऽध्याये ''देवीभागवतोक्त विशिष्ट-विषयाणां परिचिन्तनमधिकृत्य विशिष्टाः ये विषयाः तेषां समीक्षणं जातं यथा पुराणानां नामानि, श्लोकानां संख्या, अनेनैव प्रकारेण उपपुराणानां विषयेऽपि विवेचना वर्तते।

तृतीयोऽध्याये ''देवीभागवतोक्त विविध स्कन्धेषु कुत्र कुत्र तन्त्रस्य प्रभाव इति समीक्षणमस्ति।

चतुर्थोऽध्याये ''तन्त्राणां संक्षिप्त परिचयः'' इति विषयं सम्यग्रूपेण विवेचितं। विवेचने अयं विषयः वर्तते
तन्त्रस्य प्राचीनता प्रामाण्यं च, सिन्धुद्रोणसभ्यतायां तन्त्रस्य प्रागारम्भः, तन्त्रस्येतिहासे विचारद्वयो दृश्येते, (१) ''ऐतिहासिक दृष्टि'', (२) शास्त्रीयदृष्टिश्च, तन्त्रस्य वीजमित्यादि पञ्चमोऽध्याये ''देवीभागवतोक्त मणिद्वीपवर्णनापेक्षया तन्त्रेषु किं वैशिष्ट्यमिति परिचिन्तनम्'' इति विषयं सम्यग् विवेचितमस्ति।

षष्ठोऽध्याये तन्त्रोक्त विविधयोगानां देवीभागवते प्रतिपादनस्वरूपमिति विषयं पर्यवेक्षितम्। यथा तन्त्रोक्त सन्ध्या मुद्राप्रभृतीनां कीदृशमुपस्थापनमिति पर्यवेक्षणमस्ति।

सप्तमोऽध्याये ''देवीभागवतोक्तदर्शनविषयाणां वैशिष्ट्य प्रतिपादनं विद्यते।

एवं प्रकृत ग्रन्थः श्रीमद्देवीभागवतस्य शक्तेरूपरि यत्किञ्चिदप्यस्ति तत्सर्वं समीक्षया दृष्ट्या विवेचनं कृतं मया।

''तामादि शक्तिं शिरसा नमामि'

•••••••••••••••••••••••••••••••••••

# ❋❋❋सहायक ग्रन्थानां सूचिका❋❋❋


| क्र०सं० ग्रन्थ नाम | | लेखकः प्रकाशकश्च |
|---|---|---|
| १- श्रीमद्देवीभागवतम् | - | महर्षि व्यासः |
| २- श्रीमद्भागवतमहापुराणम् | - | महर्षि व्यासः |
| ३- स्कन्दपुराणम् | - | महर्षि व्यासः |
| ४- शिवपुराणम् | - | महर्षि व्यासः |
| ५- कल्याणशक्ति अङ्क | - | गीताप्रेस गोरखपुर |
| ६- शिवाङ्कः | - | गीताप्रेस गोरखपुर |
| ७- अष्टादशपुराण परिचयः | - | कृष्णमणि त्रिपाठी |
| ८- अहिर्बुध्न्य संहिता | - | अड्यार लाइब्रेरी मद्रास |
| ९- नित्याषोडशिकार्णव | | |
| १०- ईशाद्यष्टोत्तर शतोपनिषदः | - | व्यासप्रकाशन वाराणसी |
| ११- ऋग्वेद, यजुर्वेद, सामवेद,अथर्ववेद की टीका | - | श्रीरामशर्माआचार्य |

१२- कल्याण उपनिषद् अङ्क - गीताप्रेस गोरखपुर

१३- कल्याण योगाङ्क - गीताप्रेस गोरखपुर

१४- कामधेनुतन्त्रम् - गोपीनाथ कविराज

१५- कुलार्णव तन्त्रम्

१६- घेरण्ड संहिता - संस्कृति संस्थान बरेली

१७- तत्त्वप्रकाशः - सिद्धान्तशैवदर्शनम् चौखम्बा संस्कृत भवनम्

१८- तन्त्र और आगमशास्त्र का दिग्दर्शन - म०म०गोपीनाथ कविराज

१९- तन्त्रसारः - अभिनव गुप्तः

२०- तन्त्र सिद्धान्त और साधना - देवदत्त शास्त्री ज्ञानभैरव प्रकाशन प्रयाग

२१- तन्त्रालोक (जयरथकृत विवेक व्याख्यापेतः) - अभिनवगुप्तः

२२- तान्त्रिक वाङ्मय में शाक्त दृष्टि - म०म०गोपीनाथ कविराज

२३- तान्त्रिकसाधना और सिद्धान्त - म०म०गोपीनाथ कविराज

२४- दीक्षा - म०म०गोपीनाथ कविराज

२५- धर्मशास्त्र का इतिहास - पी०काणे हिन्दीसमिति ग्रन्थमाला

२६- नारदभक्ति सूत्रम् - नारदः-स्वामीकाशिकानन्दगिरीवारा०

२७- न्यायदर्शनम् (वात्स्यायनभाष्यसहितम् ) - गौतमः

२८- परमार्थसारः - अभिनव गुप्तः

२९- परात्रिंशिका (अभिनवगुप्तकृतविवरणसहितम् ) - काश्मीरग्रन्थावली

३०- पातञ्जलयोगदर्शनम् - पतञ्जलिः, रत्नपब्लिकेशन्

३१- पातञ्जलयोगप्रदीप - स्वामी ओमानन्दतीर्थ गीताप्रेस गोरखपुर

३२- ब्रह्मसूत्र शाङ्करभाष्यम् - बादरायणः

३३- ब्रह्मसूत्र श्रीकण्ठभाष्यम् - बादरायणः

३४- श्रीमद्भगवद्गीता (शांकरभाष्यसहिता) - परमलपब्लिकेशन दिल्ली

३५- भारतीयदर्शन की चिन्तनधारा - प्रो०राममूर्ति शर्मा मणिद्वीप दिल्ली

३६- भारतीय संस्कृति और साधना - म०म०गोपीनाथ कविराज

३७- मनुस्मृति (मेधातिथिभाष्यसहिता) - चौखम्बा प्रकाशन वाराणसी

३८- महानिर्वाण तन्त्रम् - आर्थर एवेलन मोतीलाल बनारसीदास दिल्ली।

३९- महाभारत महर्षि - वेदव्यासः

४०- महाभारत - गीताप्रेस गोरखपुर

४१- महार्थमञ्जरी - महेश्वरानन्द सं०सं०वि०वि०वाराणसी

४२- मृगेन्द्रतन्त्रम् - मेहस्वन्द लछमनदास नई दिल्ली

४३- याज्ञवल्क्यस्मृतिः - नागप्रकाशन दिल्ली

४४- योग एवं यौगिक चिकित्सा - रामहर्ष सिंह चौखम्बाप्रकाशन

४५- योगतन्त्र विमर्शिनी - म०म०गोपीनाथ कविराज

४६- योगदर्शनम् (हिन्दी व्याख्यासहित) - पतञ्जलिः (गीताप्रेस)

४७- योगसार संग्रहः - विज्ञानमिश्र दिल्ली प्रकाशन

४८- योगासन - स्वामी शिवानन्द , टिहरी गढ़वाल

४९- रुद्रयामलतन्त्रम् - रामकुमार राय चौखम्बा प्रकाशन

५०- लक्ष्मीतन्त्रम् - चौखम्बा संस्कृत सीरीज प्रकाशन

५१- ललितासहस्रनामस्तोत्रम् - वटुकनाथशास्त्री खिस्ते द्वारा प्रकाशन

५२- वरिवस्यारदस्यम् - भास्कररायः अड्यार लाइब्रेरी मद्रास

५३- वैशेषिकदर्शनम् (प्रशस्तपादभाष्य सहितम् ) कणादः चौखम्बाप्रकाशन

५४- शतपथ ब्रह्मण - चौखम्बाप्रकाशन वाराणसी

५५- शारदातिलकम् - लक्ष्मीदेशिकेन्द्र करुणापति त्रिपाठी सं०सं०सं०वि०वा०

५६- शिवदृष्टिः - उत्पलदेवः

५७- शिवसूत्रविमर्शः - वसुगुप्तः मोतीलालबनारसीदास

५८- सर्वदर्शन संग्रहः - माधवाचार्य चौखम्बाप्रकाशन

५९- सिद्धसिद्धान्तपद्धतिः - गोरक्षनाथः, गोरक्षनाथमन्दिर

६०- सिद्धान्तशिखामणिः - शिवाचार्यमदास्वामी, जंगबाडी मठ

६१- सौन्दर्यलहरी - भगवत्पादशंकराचार्य्यः

६२- सौभाग्यभास्कर (भास्कररायकृत) - बटुकनाथशास्त्री खिस्ते

६३- स्पन्दकारिका - भट्टकल्लटाचार्यः चौखम्बाप्रकाशन

६४- स्वच्छन्दतन्त्रम् - क्षेमराजप्रणीतोद्योत व्याख्या सहितम् सं०सं०सं०वि०वा०

६५- हठयोगप्रदीपिका - स्वात्मरामोयोगी सं०सं०बरेली

६६- नाट्यशास्त्रम् - भरतः, डा०पारसनाथ द्विवेदी द्वारा अभिनवगुप्तटीका सहितम्।

६७- काव्यादर्शः - दण्डी

| | | |
|---|---|---|
| ६८- सरस्वतीकण्ठाभरणम् | | |
| ६९- सांख्यकारिका | | |
| ७०- सिद्धान्तकौमुदी | - | भट्टोजीदीक्षित |
| ७१- संस्कृतसाहित्य का इतिहास | - | वाचस्पति गैरोला |
| ७२- संस्कृतशब्द कोष | - | आप्टे |
| ७३- संस्कृतसाहित्य का इतिहास | - | ए०बी०कीथ |
| ७४- संस्कृतसाहित्य का इतिहास | - | बलदेव उपाध्याय |
| ७५- संस्कृतसाहित्य का इतिहास | - | लोकमणि दाहालः |

..............................